।।श्रीः ।।

चौखम्बा सुरभारती ग्रन्थमाला
३१७

श्रीगणेशकविविरचितः

# जातकालङ्कारः

सान्वयः 'हरभानु'-संस्कृतटीकया 'प्रज्ञावर्द्धिनी'
हिन्दीटीकया च विभूषितः

सम्पादकः व्याख्याकारश्च
डॉ. सत्येन्द्रमिश्रः
ज्योतिष-विभागः
काशीहिन्दूविश्वविद्यालयः, वाराणसी

चौखम्बा सुरभारती प्रकाशनः
वाराणसी

# विषयानुक्रमणिका

| विषय | पृष्ठाङ्क |
|---|---|

**विषय** | **पृष्ठाङ्क**

।। श्रीः ।।

श्रीगणेशकविविरचितः

# जातकालङ्कारः

**सान्वयः श्रीहरभानुकृतसंस्कृतटीका**
**'प्रज्ञावर्द्धिनी' हिन्दीटीकासमलङ्कृतश्च**

## संज्ञाध्यायः–१

वस्वर्णब्रह्मविद्यापरिचयचतुरं श्रीशुकं व्यासपुत्रं
नत्वाऽऽचार्यं मुनीनां हरिपदकमले प्रेमविश्रामभाजाम् ।
स्विष्टेष्टं स्वेष्टदेवं श्रुतिसमधिगतं माधवं भावयित्वा
भावैरुद्भव्यतेऽस्मै प्रवरमतिमुदे जातकालङ्कृतश्रीः ।।

अथ ज्योतिर्वित्तिलकः छन्दोऽलङ्कृतिकाव्यरचनानिपुणः श्रीगणेशकविः श्रीशुकजातकानुरोधि जातकालङ्कारनामकं ग्रन्थं चिकीर्षुस्तदादौ निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारक्रमागतं भगवद्विभूतिगुरुगणेशभारतीकर्मप्रणिपात-परं वस्तुनिर्देशात्मकं मङ्गलमाचरति शार्दूलविक्रीडिताभ्याम्—

### मङ्गलाचरणम्

**सानन्दं प्रणिपत्य सिद्धिसदनं लम्बोदरं भारतीं**
**सूर्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितम् ।**
**येषामंङ्घ्रिसरोरुहस्मरणतो नानाविधाः सिद्धयः**
**सिद्धिं यान्ति लघुप्रयान्ति विलयं प्रत्यूहशैलव्रजाः ।। १ ।।**
**सद्भावाकलितं पदार्थललितं योगाङ्ग लीलार्चितं**
**श्रीमद्भागवतं शुकास्यगलितं यच्छ्रीधरस्वामिना ।**
**सुव्यक्तं क्रियते गणेशकविना गाथोक्तितज्जातकं**
**वृत्तस्रग्धरया जनादिसुफलं ज्योतिर्विदां जीवनम् ।। २ ।।**

**अन्वयः-** येषामङ्घ्रिसरोरुहस्मरणतो नानाविधासिद्धयः सिद्धिं यान्ति, प्रत्यूह शैलव्रजाः लघु प्रयान्ति, सानन्दं हृदब्जे स्थितं सिद्धिसदनं लम्बोदरं भारतीं सूर्यादिनवग्रहमण्डलं निजगुरुं भक्त्या प्रणिपत्य,सद्भावाकलितं पदार्थललितं योगाङ्गलीलार्चितं शुकास्य गलितं श्रीमद्भागवतं यत् श्रीधरस्वामिना सुव्यक्तं

(तथैव मया)गणेश कविना गाथोक्तितज्जातकं जनादि सुफलं ज्योतिर्विदां जीवनं वृत्तस्त्रग्धरया सुव्यक्तं क्रियते ।। १-२ ।।

**सानन्दमिति । सद्भावाकलितमिति** च । गणेशनाम्ना ग्रन्थकरणकुशलेन मया तज्जातकं वृत्तस्रग्धरया प्रव्यक्तं क्रियते स्पष्टार्थं यथास्यात्तथा विधियत इत्यर्थः । किं कृत्वा भक्त्या तान्-सिद्धिसदनभूतान् नमस्कृत्य । तान् किं विधान् येषामंघ्रिसरोरुह स्मरणतः नानाविधाः अनेकविधाः सिद्धयः कार्यसिद्धयः सिद्धिं पूर्णतां यान्ति प्रत्यूहशैलव्रजाः विघ्नपर्वतसमूहाः 'विघ्नोऽन्तरायः प्रत्यूह, इत्यमरः 'व्रजो गोष्ठाध्ववृन्देषु, इत्यमरः लघु शीघ्रं विलयं यान्ति नश्यन्ति 'लघुक्षिप्रमरं द्रुतमित्यमरः, लघ्विति पदं शीघ्रतावाचकं देहलीदीपकन्यायेनोभयत्रान्वेति । तान् कान् तदाह सिद्धिसदनं सिद्धिर्लक्ष्मीः तस्याः सदनं गृहं निवासस्थानमिति यावत् श्रीनिवास इत्यर्थः। त्वं सिद्धिस्त्वं स्वधा स्वाहेत्यादि लक्ष्मीस्तुत्यारम्भे सिद्धिशब्दस्य लक्ष्म्यां प्रयुक्तत्वात् सिद्धिर्लक्ष्मीरिति नित्यविकल्पोर्थः । कीदृशं सिद्धिसदनं सानन्दं आनन्देन सहितं ब्रह्मणः आनन्दः 'आनन्दं ब्रह्मणो विद्वानिति, श्रुतेः । सानन्दमिति विशेषण पदं भगवतोऽन्यत्र नोपपद्यते । ततोऽन्यदार्तमिति श्रुत्या ब्राह्मणामित्यत्रार्तवोपदेशात् हृदब्जे स्थितं । हृदयकमलवासिनं 'सर्वस्य चाहं हृदि सन्निविष्ट' इति भगवद्वचनात् । भक्त्या प्रीतिपूर्वकानुस्मृत्या गुरुं श्रीमच्छिवाख्यं लम्बोदरं विनायकं भारतीं सरस्वतीं सूर्यादिग्रहमण्डलं रव्यादीनां ग्रहाणां मण्डलं समूलं च प्रणिपत्य नमस्कृत्य शुकास्यगलितं शुकमुनिमुखात् भक्तिभूतं गलितं गाथोक्ति गाथानां श्लोकविधुराणां उक्तिर्व्यवहारो यस्मिन् तथाभूतं कथं व्यक्तं क्रियते यथा शुकास्यात् गलितं श्रीमद्भागवतं महापुराणं श्रीधरस्वामिना व्यक्तं कृतमित्यध्याहारः ।

कथंभूतं भागवतं जातकं च सद्भावाकलितं सन् प्रशस्तो भावो विष्णुभक्तिः तेनाकलितं विशिष्टं जातकपक्षे सद्भावैस्तन्वादितिद्वादशभावैस्तात्पयैर्वा विशिष्टं पदार्थललितं पदार्थैः परमभक्तयुद्योत्तकैः श्रवण कीर्तनादिभिः ललितं रुचिरं, जातकपक्षे-पदार्थैः सानन्दसदनादिभिर्मनोहरं योगांगलीलाचितं योगो भक्तियोगस्तस्यांगानि

यमनियमप्राणायामप्रत्याहारध्यानधारणासमाधयः तेषां लीला उपदेश विशेषस्ताभिरर्चितं महितं जातकपक्षे योगांगानि ग्रहभावादीनि तेषां लीलायोग्यत्वेन घटनविशेष आस्ताभिरर्चितं प्रशस्तमित्यर्थः । ज्योतिर्विदां जीवनं ज्योतिः परमात्मा 'नारायणः परं ज्योतिरिति' श्रुतेः । तद्विदां ब्रह्मविदां जीवनं कालक्षेप योग्यं जातकपक्षे ज्योतिर्विदां गणकानां जीविका प्रदत्त्वात् जीवनमित्यर्थः । वृत्तस्रग्धरया स्रग्धरावृत्तैरित्यर्थः जात्यभिप्रायेणैकवचनोक्तिः । तस्य लक्षणं चत्वारो यत्र वर्णाः प्रथममित्यादि : ।। १-२ ।।

**प्रज्ञावर्द्धिनी**

साम्बं सदाशिवं नत्वा सूर्यादीन् ग्रहमण्डलान् ।
कृता सत्येन्द्रमिश्रेण व्याख्या प्रज्ञा(प्र)वर्द्धिनीम् ।।

**हिन्दी—**जिन चरणकमलों के स्मरणमात्र से ही अनेकानेक सिद्धियाँ प्राप्त होती हैं और बड़े बड़े विघ्नपर्वतों का नाश होता है ऐसे हृदयकमलस्थित श्रीगणेश-सरस्वती-सूर्यादिग्रह तथा स्वगुरु को आनन्दपूर्वक हार्दिक प्रणाम करता हूँ ।

सुन्दरभावों से युक्त, अर्थों से सुशोभित, योग (भक्ति) के अंगो (यमनियमादि) की लीलाओं (दृष्टान्तों) से परिपूर्ण, श्री शुकदेव जी के मुख से निर्गलित श्रीमद्भागवत को श्रीधर स्वामी ने अपनी टीका द्वारा जैसे स्पष्ट किया वैसे ही मैं भी (श्रीगणेश) द्वादश भावों से युक्त जातकफल को सुन्दर ढंग से व्यक्त करता हूँ । ज्योतिर्विदों के लिए स्रग्धरा छन्द में निर्मित यह ग्रन्थ सुन्दरफल देने वाला और जीविका बढ़ाने वाला सिद्ध होगा ।। १-२ ।।

ग्रन्थारम्भ-प्रयोजनम्—

**यत्पूर्वं परमं शुकास्यगलितं सज्जातकं फक्किकां**
**रुपं गूढतमं तदेव विशदं कुर्वे गणेशोस्म्यहम्।**
**दैवज्ञः सुतरां यशः सुखमतिः श्रीहर्षदं स्त्रग्धरा**
**वृत्तैश्चारु नृणां शुभायनपदं श्रीमच्छिवानुज्ञया ।। ३ ।।**

**अन्वयः-** दैवज्ञः सुतरां यशः सुखमतिःअहं गणेशः यत् सज्जातकं पूर्वं परम शुकास्यगलितं फक्किकारुपगूढतमं तदेव नृणां श्रीहर्षदं शुभायनपदं श्रीमच्छिवानुज्ञया स्त्रग्धरावृत्तैश्चारु विशदं कुर्वे ।। ३ ।।

श्रीधरस्वामिवद्भवतापि शुकजातकव्याख्याने कर्तव्ये ग्रन्थारम्भो नोचेतिस्तत्राह । **यत्पूर्वमिति** । गणेशनामाहं श्रीमच्छिवानुज्ञा वेदशास्त्रपारंगतशिवनाम्नो गुरोराज्ञया तत्प्रीत्यर्थमिति भावः । पूर्वभावकाले शुकास्यगलितं छन्दोरहितत्वात् फक्किकारूपं गूढतमं अतिशयेन गहनं न तु विशदं परमं सारार्थनिरूपणेनोत्कृष्टं यज्जातकं तदेव स्त्रग्धरावृत्तैश्चारु रुचिरं विशदं कुर्वे फक्किकारूपस्य गूढतमस्य विशदीकरणं श्लोकैरेवोचितमित्या-शयः । कथं भूतो गणेशः दैवज्ञोऽदृष्टवेत्ता कर्तव्यग्रन्थभावितवार्तादर्शीति गूढभावः। सुतरां यशः सुखमतिः अतिशयित कीर्तिजन्य सुखे मतिर्यस्य सः, प्रयोजनगर्भमिदं विशेषणं यशोऽन्यसुखार्थमिति भावः । कीदृशं तं श्रीहर्षदं श्रियं हर्षं च ददाति तत् । शुभायनपदं शुभायनानां शुभजातकानां आनन्दसिद्धिसदनादीनां पदं स्थानम् ।। ३ ।।

**हिन्दी–** पूर्व में जो शास्त्र फक्किका (सूत्र) रूप में श्री शुकदेव जी के मुख से निर्गलित था उसी शास्त्र को मैं (गणेश) अपने शिव नामक गुरु की आज्ञा से सरल शब्दों में व्यक्त करता हूँ जो स्त्रग्धरा छन्दों में है । यह ग्रन्थ दैवज्ञों के लिए शीघ्र सुख-सम्पत्ति दायक-आनन्दवर्द्धक और शुभफलदायक सिद्ध होगा।। ३ ।।

विद्वत्प्रशंसा—

**भूयांसः सन्ति भूमौ निजमतिरचनाशालिनः काव्यगुम्फे**
**संख्यावन्तस्तथाऽपि प्रचुरपरगुणानन्दलीलां भजन्ते ।**
**चञ्चद्गाम्भीर्य पद्माविबुधविटपिनां जन्मसंप्रप्तिभूतो**
**मर्यादां न स्वकीयां त्यजति किल महान् रत्नधामासरस्वान् ।। ४।।**

**अन्वयः-** भूमौ काव्यगुम्फे निजमति रचनाशालिनः भूयांसः संख्यावन्तः सन्ति तथापि प्रचुर परगुणानन्दलीलां भजन्ते । (यथा) चञ्चद्गाम्भीर्यपद्माविबुध विटपिनां जन्म संप्राप्तिभूतो महान् रत्नधामा सरस्वान् किल स्वकीयां मर्यादां न त्यजति ।। ४ ।।

ननु सत्कवीनां हर्षप्रदं त्वदीयं जातकं न स्यादित्याह । **भूयांस इति ।** भूमौ यद्यपि काव्यगुम्फे गद्यरचनायां निजमतिरचनाशालिनः निजमत्या काव्यरचना तया शालन्ते ते भूयांसो निपुणाः संख्यावन्तः कवयः सन्ति तथापि प्रचुरपरगुणानन्द लीलां भजन्ते प्रकृष्टपरगुणानुभवजन्यानन्द लीलां उद्वहन्ति नापेक्षन्ते इत्यर्थः । 'परगुणपरमाणून पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः' इत्युक्तत्वात् कृत्यानपरगुणानुभवजन्यः प्रमोद एवं तेषां लीलेति भावः । उक्तमर्थमर्थान्तर न्यासेन द्रढयति । चञ्चद्गाम्भीर्यं च पद्मा च विबुधविटपी चेति चञ्चद्गाम्भीर्यपद्माविबुध विटापिनः चञ्चन्तो द्योतमाना गाम्भीर्यादयश्च एतेषां जन्मसम्प्राप्तिभूतः आश्रयोऽपि रत्नधामापि रत्नगृहमपि सरस्वान् समुद्रः स्वकीयां मर्यादां स्थितिं न त्यजति, तथैव कवयोऽपि प्रमोदेरन्नितिभावः । गाम्भीर्यं निश्चलता पद्मा लक्ष्मीः विबुधविटपी पारिजातः । अत्र रत्नधामेति पदं चिन्त्यम् धामशब्दस्य नपुंसकलिङ्गत्वात् अत्र तत्पुरुषसमासे 'परवल्लिङ्गं द्वन्द्व तत्पुरुषयोरित्यनुशासनेन' रत्नधामेति नपुंसकान्तत्वस्यादन्तत्वात्, अतो 'रत्नधामाप्युदन्वानिति' पाठः समीचीनः।।४।।

**हिन्दी–** इस जगत में स्व स्व बुद्ध्यानुसार काव्य रचना करने वाले बहुत से विद्वान् हैं जो एक दूसरे की काव्य रचना को देखकर (पढ़कर) आनन्दित ही होते हैं । अतएव विद्वान् लोग मेरी इस रचना को देखकर प्रसन्न ही

होंगे क्योंकि चंचलारूपा लक्ष्मी व गाम्भीर्यरूप कल्पवृक्ष के जन्मदाता और महारत्नों का भण्डार होते हुए भी समुद्र अपनी मार्यादा को नहीं त्यागता है।।४।।

तन्वादि द्वादशभाव—

**देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रमृति-**
**र्भाग्यं राज्यपदं क्रमेण गदिता लाभव्ययौ लग्नतः ।**
**भावा द्वादश तत्र सौख्य शरणं देहं मतं देहिनां**
**तस्मादेव शुभाशुभाख्य फलजः कार्यो बुधैर्निर्णयः ।। ५ ।।**

**अन्वयः-** लग्नतः क्रमेण देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृतिः भाग्यं राज्यपदं लाभव्ययौ द्वादशभावाः गदिताः । तत्र देहिनां देहं सौख्यशरणं मतं तस्मादेव शुभाशुभाख्यफलजः बुधैर्निर्णयकार्यः ।। ५ ।।

अथ तन्वादीनां सामान्यविशेषसञ्ज्ञाः कथ्यन्ते यावदध्यायम् । आदौ तावल्लग्नादीनां देहादि संज्ञां तेषां सर्वेषां भावसञ्ज्ञां च शार्दूलविक्रीडितेनाह । **देहं द्रव्यपराक्रमाविति ।** लग्नतः इति ल्यब्लोपे पञ्चमी । लग्नमारभ्य क्रमेण देहादयो द्वादशभावाः गदिताः उक्तास्तत्र लग्नं देहो देहभावः, द्वितीय तृतीयौ द्रव्यपराक्रमभावौ, चतुर्थपञ्चमौ भावौ सुखसुतौ, षष्ठः शत्रुः, सप्तमभावः कलत्रं, अष्टमो मृतिः, नवमो भाग्यम् दशमं राज्यपदम् एकादशद्वादशौ लाभव्ययनामकौ तत्र तेषु देहिनां देहः सौख्यकारणं सुखाश्रयं मतम्, अतो बुधैः ज्योतिर्विद्भिः तस्माद्देहादेव लग्नभावादेव शुभाशुभाख्यफलजो निर्णयो वक्ष्यमाणप्रकारेण कार्यः ।। ५ ।।

**हिन्दी–** लग्न से लेकर व्यय तक द्वादश भावों के क्रमशः ये नाम हैं–

(१) देह (२) द्रव्य (३) पराक्रम
(४) सुख (५) सुत (६) शत्रु
(७) कलत्र (८) मृति (९) भाग्य
(१०) राज्यपद (११) लाभ (१२) व्यय

इसमें देह (प्रथम) भाव ही प्रणियों के सुख का स्थान माना गया है । अतः विद्वानों को देहभाव से ही प्राणियों के शुभाशुभ फलों का विचार करना चाहिए ।

तन्वादि भावों की संज्ञा—

**लग्नं मूर्तिस्तथाङ्गं तनुरुदयवपुः कल्पमाद्यं ततः स्वं**
**कोशार्थाख्यं कुटुम्बं धनमथ सहजं भ्रातृदुश्चिक्यसञ्ज्ञम् ।**
**अम्बापातालतुर्य हिबुकगृहसुहृद्वाहनं यानसञ्ज्ञं**
**बन्ध्वाख्यं चाम्बु नीर जलमथ तनयं बुद्धिविद्यात्मजाख्यम् ।। ६ ।।**

**अन्वयः-** लग्नं मूर्त्तिः तथा अङ्गं तनुरुदयवपुः कल्पमाद्यम् । ततः स्वं कोशार्थाख्यं कुटुम्बं धनम् । अथ सहजं भ्रातृ दुश्चिक्यसञ्ज्ञम् । अम्बापातालतुर्यं हिबुक गृह सुहृद्वाहन यानसंज्ञं बन्ध्वाख्यमम्बुनीरं जलं च । अथ तनयं बुद्धि विद्यात्मजाख्यम् ।। ६ ।।

**लग्नमिति ।** लग्नं मूर्त्यादिशब्द वाच्यमिति मुनयः ऊचुरिति तृतीयेनान्वयः । मूर्तिः अङ्गं तनुः उदयवपुः कल्पमिति समाहारः । उदयः वपुः कल्पमाद्यं तन्वादयो लग्नपर्यायाः इति प्रथमभावः । ततोऽनन्तरं धनं स्वं कोशार्थाख्यं कोशश्चार्थश्च कोशार्थौ आख्या यस्य स तथा तत्तथोक्तं धनं स्वादिसंज्ञमूचुरित्यन्वयः । एवमग्रेपि सहजं भ्रातृदुश्चिवयसंज्ञं तृतीयभावः । अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहनं यानसंज्ञं याननामकं एवं बन्ध्वाख्यं बन्धुसंज्ञं अम्बुनीरं जलं एते चतुर्थभावस्य पर्याया इति भावः । अथ तनयं बुद्धिविद्यात्मजाख्यं वाक्स्थानं पञ्चममित्यग्रिमेण सम्बन्धः पञ्चमभावस्यैते पर्यायाः ।। ६ ।।

**हिन्दी–** द्वादश भावों के संज्ञान्तर निम्न प्रकार हैं–

**देह भाव** की (१) देह (२) मूर्ति (३) अङ्ग (४) तनु (५) उदय (६) कल्प और (७) आद्य संज्ञा है ।

**द्रव्य भाव** की (१) स्व (२) कोश (३) अर्थ (४) कुटुम्ब और (५) धन संज्ञा है ।

**पराक्रम भाव** की (१) सहज (२) भ्रातृ और (३) दुश्चिक्य संज्ञा है।

**सुख भाव** की (१) अम्बा (२) पाताल (३) तुर्य (४) हिबुक (५) गृह (६) सुहृत् (७) वाहन (८) यान (९) बन्धु (१०) अम्बु (११) नीर और (१२) जल संज्ञा है ।

**वाक्स्थानं पञ्चमं स्यातनुजमथ रिपुद्वेषवैरिक्षताख्यं**
**षष्ठं जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानम् ।**
**रन्ध्रायुश्छिद्रयाम्यं निधनलयपदं चाष्टमं मृत्युरन्यद्**
**गुर्वाख्यं धर्मसंज्ञं नवममिह शुभं स्यात्तपोमार्गसञ्ज्ञम् ।। ७ ।।**

**अन्वयः–** वाक्स्थानं पच्चमं तनुजं स्यात् । अथ रिपुद्वेषिवैरिक्षताख्यं षष्ठं, जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानं, अष्टमं रन्ध्रायुश्छिद्रयाम्यं निधनलयपदं च अन्यद् मृत्यु, नवमं गुर्वाख्यं धर्मसंज्ञं इह शुभं तपो मार्ग सञ्ज्ञं स्यात् ।। ७ ।।

**वाक्स्थानमिति** । अथ षष्ठं रिपुद्वेषवैरिक्षताख्यमुचुः रिपुद्वेषिवैरिक्षतनामकमित्यर्थः । अथ सप्तमं जामित्रमस्तस्मरमदनमदद्यून-कामाभिधानं ऊचुः सप्तमं जामित्रास्तस्मरमदनादिनामकमित्यर्थः । अथाष्टमं रन्ध्रायुश्छिद्रयाम्यनिधनलयपदं मृत्युं अष्टमं रन्ध्रादि नामकमित्यूचुः । अतो नवममिह शास्त्रे गुर्वाख्यं धर्मसञ्ज्ञं शुभं तपोमार्ग सञ्ज्ञमूचुः ।। ७ ।।

**हिन्दी–सुत भाव** की (१) तनय (२) बुद्धि (३) विद्या (४) आत्मज (५) वाक् (६) पञ्चम और (६) तनुज संज्ञा है ।

**शत्रु भाव** की (१) रिपु (२) द्वेष (३) वैरी (४) क्षत और (५) षष्ठ संज्ञा है ।

**कलत्र भाव** की (१) जामित्र (२) अस्त (३) स्मर (४) मदन (५) मद (६) द्यून और (७) काम संज्ञा है ।

**मृति भाव** की (१) अष्टम (२) रन्ध्र (३) छिद्र (४) याम्य (५) निधन (६) लयपद और (७) मृत्यु संज्ञा है ।

**भाग्य भाव** की (१) नवम (२) गुरु (३) धर्म (४) शुभ (५) तप और (६) मार्ग संज्ञा है ।। ७ ।।

**ताताज्ञामानकर्मास्पदगगननभो व्योममेषूरणाख्यं**
**मध्यं व्यापारमूचुर्दशममथभवं चागमं प्राप्तिमायम् ।**
**इत्थं प्रान्त्यान्तिमाख्यं मुनयः इह ततो द्वादशं रिष्फमाहु-**
**ग्राह्यं बुध्वा प्रवीणैर्यदधिकममुतः संज्ञया तस्य तच्च ।। ८ ।।**

**अन्वयः—** ताताज्ञामानकर्मास्पदगगननभो व्योममेषूरणाख्यं मध्यं व्यापारं दशमं ऊचुः । अथ भवं च आगमं प्राप्तिं आयं ऊचुः । इत्थं मुनयः प्रान्त्यान्तिमाख्यं द्वादशं रिष्फं आहुः । अमुतः प्रवीणैः यदधिकं तत् तस्य संज्ञया बुद्ध्वा ग्राह्यम् ।। ८ ।।

**तातेति ।** अथ तनोदर्शमं तातादिनामकमूचुरिति । आज्ञामानं कर्म आस्पदं गगनं नभो व्योममेषूरणं मध्यं व्यापारमुचूरिति स्फुटोक्तिः । अथ भवं एकादशं आगमं प्राप्तिमायमूचुः इत्थमुक्तम् । ततो द्वादशं प्रान्त्यान्तिमाख्यं प्रान्त्यनामकं अन्तिमं रिष्फं चाहुः । यदमुतः प्रोक्तात्पर्यायसमुदायात् अधिकं दृश्येत् तस्य तस्य यन्नामोक्तं नामसंज्ञायां पर्यायं बुध्वा ततुल्यार्थं शुद्धं ग्राह्यं यथा वित्तशब्देन तुल्यार्थे धनं सहोत्थ शब्देन सहजभावो ग्राह्य इति ।। ८ ।।

**हिन्दी—राज्यपद भाव** की (१) तात (२) आज्ञा (३) मान (४) कर्म (५) आस्पद (६) गगन (७) नभ (८) व्योम (९) मेषूरण (१०) मध्य और (११) व्यापार संज्ञा है ।

**लाभ भाव** की (१) भव (२) आगम (३) प्राप्ति और (४) आय संज्ञा है ।

**व्यय भाव** की (१) प्रान्त्य (२) अन्त्य और (३) रिष्फ संज्ञा है । इन संज्ञाओं के अतिरिक्त यदि और कहीं कुछ संज्ञान्तर मिले तो उसे विद्वानों को ग्रहण करना चाहिए ।। ८ ।।

**आद्यं तुर्य कलत्रं दशममिह बुधैः केन्द्रमुक्तं त्रिकोणं**
**पुत्रं धर्माख्यमुक्तं पणफरमुदितं मृत्युलाभात्मजार्थम् ।**
**धर्मं चापोक्लिमाख्यं व्ययरिपुसहजं कण्टकाख्यं हि केन्द्रं ।**
**चेतच्चातुष्ट्यं स्यात् त्रिकमिह्गदितं वैरिरिष्फान्तकाख्यम् ।। ९ ।।**

**अन्वयः–** इह बुधैः आद्यं तुर्यं कलत्रं दशमं केन्द्रमुक्तं, धर्माख्यं त्रिकोणं उक्तम् । मृत्युलाभात्मजार्थं पणफरं उदितम् । व्ययरिपुसहजं धर्मं च आपोक्लिमाख्यं उदितम् । एतच्चतुष्टयं हि केन्द्रं कण्टकाख्यं स्यात् । इह वैरिरिष्फान्तकाख्यं त्रिकं गदितम् ।। ९ ।।

**आद्यमिति ।** इह शास्त्रे बुधैः आद्यं-चतुर्थ-सप्तमं-दशमं केन्द्रमुक्तं कंटकाख्यं चतुष्टयं च चतुष्टयमेव चातुष्टयं स्यात् । पञ्चमं नवमं त्रिकोणमुक्तं मृत्युलाभात्मजार्थ अष्टममेकादशं पञ्चमं द्वितीयं पणफरमुक्तम् । नवमं द्वादशं षष्ठं सहजं आपोक्लिमसंज्ञं उदितम् वैरिरिष्फान्तकाख्यं षष्ठंद्वादशाष्टमं त्रिकमुक्तम् ।। ९ ।।

**हिन्दी–**ज्यौतिषशास्त्र में आचार्यों ने आद्य-चतुर्थ-सप्तम-दशम भाव को केन्द्र संज्ञक माना है । पञ्चम नवम को त्रिकोण अष्टम-एकादश-पञ्चम-द्वितीय को पणफर तथा नवम-द्वादश-षष्ठ और तृतीय को आपोक्लिम संज्ञक माना है । केन्द्र (१-४-७-१०) को चतुष्टय एवं कण्टक संज्ञक तथा षष्ठ-अष्ट-द्वादश को त्रिक संज्ञक माना है ।

| **संज्ञा** | **भाव** |
|---|---|
| कण्टक | १-४-७-१० |
| त्रिकोण | ५-६ |
| पणफर | २-५-८-११ |
| आपोक्लिम | ३-६-९-१२ |
| त्रिक | ६-८-१२ |

ग्रहमैत्री—

**चन्द्रेज्यक्षितिजा रवीन्दुतनयौ गुर्विन्दुसूर्या: क्रमात्-**
**शुक्रार्कौ रविचन्द्रभूमितनया ज्ञार्की सितज्ञौ मता: ।**
**अर्कादे: सुहृद: समा अथ बुध: सर्वे हि शुक्रार्कजौ**
**भौमाचार्ययमा यम: कुजगुरु पूज्य: परे वैरिण: ।। १० ।।**

**अन्वय:–** अर्कादे : सुहृद: क्रमात् चन्द्रेज्यक्षितिजा: रवीन्दु तनयौ गुर्विन्दुसूर्या: शुक्रार्कौ रविचन्द्रभूमितनया: ज्ञार्की सितज्ञौ मता: । अथ समाहि बुध: सर्वे शुक्रार्कजौ भौमाचार्ययमा: यम: कुजगुरु पूज्य: परे वैरिण: स्यु: ।। १० ।।

अथ मित्रशत्रूनेकेन शार्दूलविक्रीडितेनाह । **चन्द्रेति ।** चन्द्रेजयक्षिति जादय: अर्कादे: सुहृद:, बुधादय: समा:, अन्ये वैरिणो मता: मुनिभिरिति शेष: । सूर्यस्य चन्द्रस्य मित्रे, सर्वे अन्ये समा: । गुर्विन्दुसूर्या: भौमस्य मित्राणि शुक्रशनी समौ, बुध: शत्रु: । शुक्रसूर्यौ बुधस्य मित्रे, भौमगुरुशनय: समा:, चन्द्र: शत्रु: । रविचन्द्रभौमा: गुरोर्मित्राणि, शनि: सम: बुधशुक्रौ शत्रु: । बुध शनी शुक्रस्य मित्रे, कुजगुरू समौ, रविचन्द्रौ शत्रू । सितज्ञौ शनेर्मित्रे, गुरु: सम:, रवीन्दुभौमा: शत्रव: ।। १० ।।

**हिन्दी–** सूर्यादि ग्रहों के **मित्र** इस प्रकार हैं–

**सूर्य** के चन्द्र-गुरु-भौम मित्र होते हैं ।
**चन्द्र** के सूर्य-बुध मित्र होते हैं ।
**भौम** के गुरु-चन्द्र-सूर्य मित्र होते हैं ।
**बुध** के शुक्र-सूर्य मित्र होते हैं ।
**गुरु** के सूर्य-चन्द्र-भौम मित्र होते हैं ।
**शुक्र** के बुध-शनि मित्र होते हैं ।
**शनि** के शुक्र-बुध मित्र होते हैं ।

**सम** इस प्रकार हैं –

**सूर्य** का बुध सम होता है ।
**चन्द्र** के सभी ग्रह सम होते हैं ।

**भौम** के शुक्र-शनि सम होते हैं ।

**बुध** के भौम-गुरु-शनि सम होते हैं ।

**गुरु** का शनि सम होता है ।

**शुक्र** के भौम-शनि सम होते हैं ।

**शनि** का गुरु सम होता है ।

मित्र और सम से परे जो ग्रह होते हैं वे परस्पर एक दूसरे **शत्रु** होते हैं । जैसे–

**सूर्य** के - शुक्र और शनि शत्रु होते हैं ।

**चन्द्र** का - कोई भी शत्रु नहीं होता ।

**भौम** का - बुध शत्रु होता है ।

**बुध** का - चन्द्र शत्रु होता है ।

**गुरु** के - बुध और शुक्र शत्रु होते हैं ।

**शुक्र** के - सूर्य और चन्द्र शत्रु होते हैं ।

**शनि** के - सूर्य, चन्द्र और भौम शत्रु होते हैं ।। १० ।।

ग्रह दृष्टि—

**तृतीयदशमे ग्रहो नवमपञ्चमेष्टाम्बुनी क्रमात्-**
**चरणवृद्धितः स्मरगृहं ततः पश्यति ।**
**कुजः सितबुधौ शशी रविबुधौ सितक्ष्मासुतो**
**गुरुर्यमशनी गुरुर्भवनपा इमे मेषतः ।। ११ ।।**

**अन्वयः –** ग्रहः तृतीयदशमे नवमपञ्चमे अष्टाम्बुनी स्मरगृहं क्रमात् चरणवृद्धितः पश्यति । तथा कुजः सित बुधौ शशी रवि बुधौ सितक्ष्मासुतौ गुरुर्यमशनी गुरुः इमे मेषतः भवनपाः भवन्ति ।। ११ ।।

अथ दृष्टिः पृथ्वीवृत्तेनाह । तृतीयदशमादिषु चरणवृद्धितः पश्यति तत्र तृतीयदशमे चरणदृष्ट्या पश्यति, नवमपञ्चमे द्विचरणदृष्ट्या पश्यति, अष्टमचतुर्थे चरणत्रयदृष्ट्या पश्यति, स्मरगृहं सप्तमं चतुर्थश्चरणदृष्ट्या पूर्णं पश्यतीत्यर्थः । तृतीयदशमे शनिः नवमपञ्चमे गुरुः चतुर्थाष्टमे भौमः पूर्णदृष्ट्या पश्यतीति । जातकान्तरे स विशेषो ज्ञेयः । इमे कुजादयो मेषतो मेषमारभ्य

भनवपा: राशीशा:, मेषस्य कुज: वृषस्य शुक्र: मिथुनस्य बुध:, कर्कस्य चन्द्र: सिहंस्य रविरित्यादि ।। ११ ।।

**हिन्दी–** ग्रह अपने स्थान से तृतीय-दशम स्थान को एक चरण दृष्टि से, नवम-पञ्चम स्थान को दो चरण दृष्टि से तथा चतुर्थ-अष्टम को तीन चरण दृष्टि से और सप्तम को चार चरण (पूर्ण) दृष्टि से देखते हैं । भौम-शुक्र-बुध-चन्द्र-सूर्य- बुध-शुक्र-भौम-गुरु-शनि और गुरु क्रमश: मेषादि राशियों के स्वामी होतें है ।। ११ ।।

अध्याय उपसंहार—

**हृद्यै: पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**संज्ञाध्याय: श्रीगणेशेन वर्यैर्वृत्तैर्दिग्भि: संयुतोऽयं प्रणीत:।।१२।।**

।। इति जातकालङ्कारे प्रथमोऽध्याय: ।।

**अन्वय:-** हृद्यै: पद्यै: गुम्फिते सूरितोषे मञ्जुले अलङ्काराख्ये अस्मिन् जातके (ग्रन्थे) श्रीगणेशवर्यै: दिग्भि: वृत्तै: संयुत: अयं संज्ञाध्याय: प्रणीत: ।। १ ।।

अध्यायं समापयति शालिन्याह । **हृद्येति ।** श्रीगणेशेन विदुषा उत श्रीविशिष्टेन गणेशेन अलंकाराख्ये अलंकारनामके मञ्जुले रुचिरे हृद्यै: पद्यैर्गुम्फिते मनोहरै: श्लोकै रचितेऽस्मिन्ग्रन्थे वर्यै: श्रेष्ठै: दिग्भि: दशभि: वृत्तै: श्लोकै: अयं आदिम: प्रथम: सञ्ज्ञाध्याय: प्रणीत: उक्त: रचित इत्यर्थ: ।। १ ।।

।। इति श्रीहरभानुविरचितायां जातकालङ्कारटीकायां संज्ञाध्याय: प्रथम: ।।

**हिन्दी–** मनोहर स्रग्धरा छन्दों से युक्त विद्वानों को सन्तोष देने योग्य यह जातकालङ्कार ग्रन्थ में दश श्लोकों में निर्मित इस संज्ञाध्याय की पूर्ति हुई।।१।।

विमर्श– मंगलाचरण के दो श्लोकों को यदि एक मानकर गिना जाये तो स्रग्धरा के १० छन्द होते हैं । अत: अध्याय के अन्त में जो यह कहा गया है कि मात्र दस श्लोकों में ज्यौतिष के संज्ञाओं की बात बताई गई है, वह उचित है।

सत्येन्द्रमिश्र कृत ''प्रज्ञावर्द्धिनी" हिन्दी टीका में जातकालङ्कार का संज्ञाध्याय प्रथम समाप्त ।। १ ।।

**भावाध्याय:—२**

विद्वत् प्रार्थना—

**शुकानन सरोरुहाद्गलितमत्र भूमीतले**
**फलं परमसुन्दरं सकलमाकलय्याधुना ।**
**ब्रवीमि तनुभावत: प्रवरदैववित्तोषदं**
**यदत्रममचापलं किमपि तत्क्षमध्वं बुधा: ।। १ ।।**

**अन्वय:—** अत्र भूमीतले शुकाननसरोरुहात् सकलं गलितं प्रवरदैव-वित्तोषदं परमसुन्दरं फलं तनुभावत: अधुना आकलय्य ब्रवीमि । यत्किमपि मम चापलं तत् क्षमध्वं बुधा: ।। १ ।।

अथ भावाध्यायो व्याख्यायते । कवि: स्वविनयं विशदयन् भावफलं वक्तुं पृथिवीवृत्तेन प्रतिजानीते । **शुकेति** । शुकाननसरोरुहाद्गलितं अहं तनुभावत: तत आरभ्य तत्फलं जातकफलं अधुना ब्रवीमि । हे बुधा: पण्डिता: अत्र वचने मम यत्किमपि चापलं स्यात् तद्यूयं क्षमध्वं इति प्रार्थना: । किं कृत्वा ब्रवीमि — अत्र भूमितले शुकाननसरोरुहात् शुकमुखारविन्दाद्गलितं शिष्यप्रशिष्यद्वारा प्राप्तं परमसुन्दरं सकलं फलं आकलय्य विचार्य कथंभूतं फलं प्रवरदैवविदां तोषदं उत्कृष्टज्योतिर्विदामानंददं अन्यत्रोक्तमन्यतो ग्राह्यमितिन्यायेन प्रथमं ग्रहभावस्पष्टता तेषां बलं च ज्ञातव्यं ततो भावसामान्यफलान्तरं शुभपापमित्रग्रह दृष्टियोगादिकं भावषड्वर्गा: भावेशस्योदयास्तादिकं ज्ञातव्यम् । तदुक्तं पृथुयशसा (षट् . १।३)-

यो यो भाव: स्वामिदृष्टो युतो वा सौम्यैर्वास्यात्तस्य तस्यास्ति वृद्धि: ।
पापैरेवं तस्य भावस्यहानि: निर्देष्टव्यां प्रश्नतो जन्मतो वा ।।

तत्र विशेषो गर्ग: (बृहज्जातके भट्टो. २०।१०) —

नीचस्थो रिपुगेहस्थो ग्रहो भाव विनाशकृत् ।
उदासीनो ग्रहो मध्यो मित्रस्वर्क्ष त्रिकोणग: ।
स्वोच्चस्थश्च ग्रहोऽप्येवं भाववृद्धिकर: स्मृत: ।

व्ययाष्टमषष्ठभावेषु वैपरीत्यफलमाह उशनाचार्य: ।

सौम्याः पुष्टिं पापा विपर्ययं संश्रिताग्रहाः कुर्युः ।
मूर्त्यादिषु निधनान्त्य रिपुभावे व्युत्क्रमात्फलदाः ।।

अन्यच्च –

सौम्यवर्गाश्रिता भावाः शुभतां प्राप्नुवन्ति हि ।
पापवर्गाधिका नेष्टास्तन्वाद्या नात्र संशयः ।।
लग्नलग्नाधिपौ स्यातां बलाधिकतरौ यदि ।
तत्फलानां प्रवृद्धिः स्याद्धीनो हानिकरः स्मृतः ।।
एवं भावेषु सर्वेषु भावभावेशयोर्बलात् ।
ततो जनुषि वक्तव्या हानिवृद्धिश्च कोविदैः ।। इति ।।

सर्वार्थचिन्तामणौः – २।३..५।

लग्नाधिभावाद्रिपुरन्ध्ररिष्फे पापग्रहास्तद्भवनानि नाशः ।
सौम्यास्तु तेषूक्तफलप्रदाः स्युस्तन्वादिकानां फलमेवमाहुः ।।
यद्भावनाथोरिपुरंध्ररिष्फे दुःस्थानपो यद्भवनस्थितो वा ।
तद्भावनाशं कथयन्ति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यम् ।।
तत्तद्भावत्रिकोणे स्वसुखमदनभे चास्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुस्त्वथ च शुभकरीमन्यथात्वे प्रणाशं
मिश्रं मिश्रग्रहेन्द्रैः सकलमपि तथा मूर्तिभावादिकानाम् ।। इति ।। १ ।।

प्रज्ञावर्द्धिनी—

**हिन्दी–** इस पृथ्वी पर श्री शुकदेवजी के मुख से निर्गलित दैवज्ञवर्ग को सन्तुष्ट करने वाला जो सुन्दरतम फलादेश है उसको संग्रहकरके तन्वादि द्वादशभाव सहित व्यक्त करता हूँ । इसमें मुझसे यदि कुछ चापल्य हो जाय तो विज्ञजन उसे क्षमा करेगें ।। १ ।।

तनुभाव फल—

**देहाधीशः सपापो व्ययरिपुमृतिगश्चेत्तदा देहसौख्यं**
**न स्याज्जन्तोर्निजर्क्षे व्ययरिपुमृतिपस्तत्फलस्यैव कर्ता।**
**मूर्तौ चेत्क्रूरखेटस्तदनु तनुपतिः स्वीयवीर्येण हीनो**
**नानातङ्काकुलः स्याद्व्रजति हि मनुजो व्याधिमाधिप्रकोपम्।।२।।**

**अन्वयः–** सपापोदेहाधीशः व्ययरिपुमृतिगश्चेत् तदा जन्तो देह सौख्यं न स्यात् । व्ययरिपुमृतिपः निजर्क्षे (तदा) तत्फलस्यैव कर्त्ता स्यात् । चेन्मूर्तौ क्रूरखेटस्तदनु तनुपतिः स्वीयवीर्येण हीनोः (स्यात्तदा) हि मनुजो नानातङ्काकुलः स्यात् व्यायधिमाधि प्रकोपं व्रजति ।। २ ।।

अथ त्रिभिः श्लोकैस्तनुभावविशेषमाह । **देहाधीशेति** । देहाधीशः लग्नस्वामी सपापः पापग्रहेण युक्तः व्ययरिपुमृतिगः द्वादश षष्टाष्टमान्यतमस्थानगतश्चेत्तदा जातस्य देहसौख्यं न स्यात् । अस्य योगस्य धनादिभावे विचार्यत्वद्योतनाय प्रथममुक्तिरितिगम्यते - ''यद्भावनाथो रिपुरन्ध्ररिष्फे तद्भावनाशं कथयन्ति तज्ज्ञाः'' इति प्राक् लिखित्वात् । अन्यदाह – व्ययेशो व्यये षष्ठेशः षष्ठे अष्टमाधीशोऽष्टमे च तत्फलस्यैव कर्त्ता देहसौख्याभावकर्ता स्यात् । अयमर्थो यवनमतेन विरुद्धः । यथा बृहज्जातके (अन्योक्ति) –

रिपुभवनपे रिपुस्थे नीरुग्वैरी सुखी कृपणः ।
निधनपतौ निधनस्थे व्यवसायी व्याधिवर्जितोप्युदितः ।।

विरोधशमनाय अयमर्थो बोध्यः । देहाधीशे व्ययरिपुमृतिगे सति तद्भवनपेऽपि तत्रस्थेशुभफलं स्यादिति न वाच्यम् । पूर्वोक्तयोगे सति व्ययरिपुमृतिपः स्वभवनगतश्चेत्तत्फलस्यैव कर्तेति वाच्यम् । योगानामचिन्त्यफलत्त्वादिति । अथान्ययोगमाह **मूर्त्ताविति** । मूर्तौ लग्नेः क्रूरग्रहः क्रूरखेटः तनुपतिः लग्नेशः स्वीयवीर्येणहीनः स्वकीयबलहीनश्चेत्तदा जातो मनुजः नानातङ्काकुलः अनेकरोगाऽकुलः व्याधि रोगं आधिप्रकोपं चिन्ताव्याप्तत्त्वं व्रजति प्राप्नोति । बलहीनत्वं परपुंग्रहंनीचास्तत्वादिभिर्ज्ञेयम् । तदुक्तं जातकामृते –

स्वोच्चं मूलत्रिकोणं स्वगृहमधिसुहृद्गेहकं मित्रकं स्या-
दौदासीन्यं समर्क्षं रिपुभमधिरिपोर्भञ्च नीचाभिधानम् ।

पूर्वं पूर्वं बलीयः परमपरमिदं हीनसत्त्वं तदस्मात्–

इत्यादिवत्पद्धतिप्रकाशमतेन उत्तमबलत्वं च ज्ञेयं अल्पे बले हीनबलः इति पद्धति वचनात् ।। २ ।।

**हिन्दी–** यदि जन्मकाल में लग्न का स्वामी पापग्रह से युत होकर व्यय-षष्ठ या अष्टम भावगत हों अथवा व्यय-षष्ठ और अष्टम भावों के स्वामी अपने अपने गृह में हों तो जातक को शारीरिक सुख नहीं होता है । लग्न में यदि पापग्रह और लग्नेश बलहीन हों तो जातक अनेक तरह की चिन्ताओं से युक्त होकर नाना व्याधियों से पीड़ित होता है ।। २ ।।

शुभयोग—

**अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुतः केन्द्रगो वाक्**
**स्वीये तुङ्गे स्वमित्रे यदि शुभभवने वीक्षितः सत्वरुपः**
**स्यान्नूनं पुण्यशीलः सकलजनमतः सर्वसम्पन्निधानं**
**ज्ञानी मन्त्री च भूपः सुरुचिरनयनो मानवो मानवानाम् ।। ३ ।।**

**अन्वयः–** अङ्गाधीशः स्वगेहे बुधगुरु कविभिः संयुतः केन्द्रगो वा स्वीये तुङ्गे स्वमित्रे शुभभवने यदि (शुभै)वीक्षितः तदा नूनं सत्स्वरुपः पुण्यशीलः सकलजनमतः सर्वसम्पन्निधानं ज्ञानी मन्त्री भूपः सुरुचिरनयनः मानवानां मानवश्च स्यात् ।। ३ ।।

अथ शुभयोगानाह । **अङ्गाधीशः** इति । अङ्गधीशः अलग्ने चेदित्येको योगः । बुध गुरु कविभिर्युक्तो लग्नेशः केन्द्रगः इति द्वितीयः । स्वीये तुङ्गे स्वोच्चे अजवृषभमृगाङ्गना कुलीराझषवणिजौ च दिवाकरादि तुङ्गा इत्याद्युक्तेः । स्वमित्रे स्वमित्रगृहे अथवा शुभभवने शुभगृहे शुभग्रहैः वीक्षितः लग्नेशः इति तृतीयः ।

एषामन्यतमयोगे जातो मानवः मानवानां मध्ये भूपादिकः स्यात् । भूपः भूपालः मन्त्री, अमात्यः सर्व सम्पन्निधानं सर्वसंपदामाश्रयः ज्ञानी भूपत्वाद्युपयुक्तः ज्ञानवान् सत्स्वरूपः सत्वगुणानुरूपश्च पुण्यशीलः सुकृती सुरुचिरनयनः सुन्दरनयनादिशरीरः सकलजनमतः सर्वजनमान्यः पुण्यशीलशब्देन

सत्यार्जवादि द्योत्यते तदुक्तं जातकरहस्ये - ''यः सत्त्विकस्तस्य दयास्थिरत्वं सत्यार्जवं ब्राह्मणदेवभक्तिरिति:'' ।। ३ ।।

**हिन्दी–** लग्नेश बुध-गुरु व शुक्र के साथ स्वराशि में या केन्द्रस्थान में रहे तथा शुभग्रह की दृष्टि से युक्त रहे अथवा लग्नेश अपनी उच्चराशि में या मित्र गृही या शुभग्रह की राशि में रहे तथा शुभग्रह की दृष्टि से युक्त रहे तो जातक निश्चित ही सुन्दर आकृति से युक्त, पुण्यवान्, सकलजनप्रिय, सर्वसम्पत्तियुक्त, ज्ञानी, मंत्री अथवा राजा, सुन्दर नेत्रवाला और **मनुष्यों में श्रेष्ठ** होता है ।। ३ ।।

अशुभ योग—

**लग्ने क्रूरेऽथ याते खलखचरगृहं लग्ननाथे रवीन्दू**
**क्रूरान्तस्थानसंस्थावथ दिनपनिशकनाथयोद्यूनयायी ।**
**भूमिपुत्रस्तु पृष्ठादुदयमधिगतश्चन्द्रजश्चेन्मनस्वी**
**स्यादन्धो दुष्टकर्मा परभवनरतः पूरुषः क्षीणकायः ।। ४ ।।**

**अन्वयः–** लग्ने क्रूरे अथ लग्ननाथे खलखचर गृहं याते रवीन्दू क्रूरान्तः स्थानसंस्थौ अथ दिनपनिशानाथयोर्द्यूनयायी भूमिपुत्रश्चेच्चन्द्रजः पृष्ठादुदयमधिगतस्तदा पुरुषः मनस्वी, अन्धो दुष्टकर्मा परभवनरतः क्षीणकायः स्यात् ।। ४ ।।

अथ अनिष्टयोगत्रयं श्लोकेनाह । **लग्न इति ।** क्रूरे लग्ने क्रूरग्रहराशौ लग्नेशः स्थितः अयमेको योगः । पुष्पवन्तौ रवीन्दू क्रूरयोर्ग्रहयोर्मध्यस्थौ क्रूरमध्यस्थत्वं राश्यंशापेक्षया वा ज्ञेयम् । संकोचे प्रमाणाभावात् अयं द्वितीयो योगः । अथ दिनपनिशानाथयोः सूर्या चन्द्रमसोः द्यूनयायी सप्तमगः भौमः बुधः पृष्ठादुदयं अधिगतः पृष्ठोदयराशौ स्थित इति तृतीयो योगः । अत्र जातः पुरुषः मनस्वी स्वछन्दमना इत्यर्थः । अन्धः दुष्टकर्मा परभवनरतः परगृहवासरतः परस्त्रीरतो वा स्यात् । क्षीणकायः क्षीणशरीरश्च मनस्वित्वं कालगतचन्द्रस्य बलत्वे बोध्यम् । एवं तनुभावस्य शुभाशुभयोगा उक्ताः । ननु क्वचिच्छुभयोगेऽपि शुभफलं नोपलभ्यते तथा अशुभयोगेऽशुभफलमिति तत्र को विशेष इति चेत्सत्यं

क्रूरग्रह दृष्टयुतत्वादियोगेन अयं भावः । शुभयोगकारकग्रहोपरि क्रूरदृष्टौ सत्यां विनिश्चयाप्राप्तं फलं नोपलभ्यते अशुभयोगकारक ग्रहोपरि शुभदृष्ट्याऽ-शुभं नोपलभ्यते । ताजिककारैरित्थशालस्यदृष्टिप्रयुतमणऊयोगेन भजन्तं कृतमुक्तम् । बृहज्जातककारेण – न शुभा उदिता योगाः यथा भवन्ति शुभेक्षिता, इति उक्तम् । इति तनुभावः ।। ४ ।।

**हिन्दी–** लग्न में क्रूरग्रह हों या लग्नेश क्रूरग्रह की राशि में हो तो अथवा खलग्रहों के बीच में सूर्य चन्द्र स्थित हों तो अथवा सूर्य या चन्द्र से सप्तम भौम हो और बुध पृष्ठोदय (मेष-वृष-कर्क-धनु-मकर) राशि में रहे तो जातक मनस्वी (स्वेच्छाचारी), अन्धा, दुष्टकर्मा, परस्त्रीरत और क्षीणकाय होता है।।४।।

धनभाव फल—

**कोशाधीशः स्वराशौ सुरगुरुसहितः सर्वसंपत्प्रदः स्यात्**
**केन्द्रे वाथ त्रिके चेद्भवति हि मनुजः क्लेशभाक् द्रव्यहीनः ।**
**स्वान्त्याधीशौ त्रिकस्थौ कवितनुपयुतौ स्यात्तदा नेत्रहीनः**
**श्चन्द्रः पापेन युक्तो धनभवनगतः शुक्रयुङ्नेत्रहीनः ।। ५ ।।**

**अन्वयः–** कोशाधीशः सुरगुरुसहितः स्वराशौ केन्द्रे वा (भवेत्तदा) सर्वसम्पत्प्रदः स्यात् । अथ (गुरु सहितः कोशाधीशः) त्रिके चेत्तदा मनुजः क्लेशभाक् द्रव्यहीनश्च भवति । स्वान्त्याधीशौ कवितनुपयुतौ त्रिकस्थौ (चेत) तदा नेत्रहीनः स्यात् । पापेन युक्तश्चन्द्रः धनभवनगतः शुक्रयुक् नेत्रहीनः स्यात् ।। ५ ।।

अथ धनभावफलं श्लोकद्वयेन ब्रुवन् प्रथमं धनयोगचतुष्टयमाह । कोशाधीश इति । कोशाधीशो धनेशः गुरुयुतः स्वराशौ स्वे भागे केन्द्रे वा चेत्तदा जातस्य सर्व सम्पत्प्रदः स्यात् । अथानन्तरमन्ययोग उच्यतेत्यर्थः । गुरुयुतो धनाधीशः त्रिकेषु षष्ठाष्टद्वादशेषु अन्यतमे चेज्जातो मनुजः क्लेशभाग् द्रव्यहीनश्च स्यात्, स गुरू धनाधीशः षष्ठे चेदयं योगः शिथिलो ज्ञेयः तं प्रति चाल्पधनयोग सद्भावात् । धनाधीशस्य शुभत्वे मध्यधनयोगसद्भावात् । तदुक्तं बृहज्जातके–

लग्नादतीव वसुमान्-वसुमान् शशाङ्कात्सौम्यग्रहैरुपचयोपगतै: समस्तै: ।
द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायामन्येष्वसत्स्वपि फलेष्विदमुत्कटेन ।।

अथान्य योग: – सवान्त्यधीशौ द्वितीयद्वादशाधीशौ शुक्रलग्नेशयुक्तौ चेत्तदा जात: नेत्रहीन: अन्ध: स्यात् । अथान्ययोग: शुक्रपापाभ्यां युक्तश्चन्द्रो धनस्थश्चेत्तदा जातो नेत्रहीन: इति ।। ५ ।।

**हिन्दी–** द्वितीयेश यदि बृहस्पति के साथ अपनी राशि में हो या केन्द्र में स्थित हो तो वह सर्व सम्पत्तियुक्त करता है । यदि द्वितीयेश बृहस्पति के साथ त्रिक (६-८-१२) स्थान में हो तो जातक दु:खभागी और धनहीन होता है । यदि द्वितीयेश और द्वादशेश शुक्र एवं लग्नेश से युत होकर त्रिक (६-८-१२) में स्थित हों तो अथवा चन्द्रमा पापग्रह और शुक्र से युत होकर द्वितीय भाव में रहे तो जातक नेत्रहीन होता है ।। ५ ।।

अशुभयोग—

**शुक्र: सेन्दुस्त्रिकस्थो जनुषि निशि नर: प्राप्नुयादन्धकत्वं**
**जन्मान्ध: सार्क शुक्रस्तनुभवनपति: स्यात्तदानीं मनुष्य: ।**
**एवं तातानुजाम्बासुतनिजगृहिणीस्थाननाथा: स्थिताश्चेदा-**
**देश्यं तत्र तेषां प्रवरमतियुतैरन्धकत्वं तदानीम् ।। ६ ।।**

**अन्वय:–** सेन्दु शुक्र: जनुषि त्रिकस्थ: (तदा) नर: निशि अन्धकत्वं प्राप्नुयात् । सार्क शुक्रस्तनुभवनपति: (त्रिके) नदानीं मनुष्य: जन्मान्ध: स्यात् । एवं तातानुजाम्बासुत नुजगृहिणी स्थान जन्मान्ध: स्यात् । एवं तातानुजाम्बासुत निजगृहिणी स्थान नाथा: (त्रिके) स्थिताश्चेत्तदानीं तत्र प्रवरमति युतै: तेषाम् अन्धकत्वम् आदेश्यम् ।। ६ ।।

अथयोगत्रयं तत्र द्वितीययोगस्य तातादिष्वतिदेशं चाह । शुक्र: इति जनुषि जन्मसमये सेन्दु: सचन्द्र: शुक्रस्त्रिकस्थ: षष्ठाष्टमद्वादशेषु अन्यतमे चेत्तदा जातो मनुज: निशि अन्धकत्वं प्राप्नुयात् ।

सार्क-शुक्र: सूर्यशुक्रयुत: तनुभवनपति: लग्नेश: त्रिकस्थ: इत्यनुषङ्गस्तदानीं जातोमनुज: जन्मान्ध: जन्मनैवाऽन्ध: स्यादिति । तातादीनां स्थाननाथा: एवं पूर्वोक्तप्रकारेण सार्केन्दुशुक्रास्त्रिक्स्थानश्चेत्तदानीं तेषां

तातादीनां अन्धकत्वं प्रवरमति युतैरादेश्यं वक्तव्यम् । तत्र तातः पिता-अनुजः कनिष्ठभ्राता अम्बा माता निजगृहिणि भार्या प्रवरमति शब्देन तातादीनां जन्मन्यपि अन्धयोगज्ञानत्वं सूच्यते । इति धनभावः ।। ६ ।।

**हिन्दी–** जन्मकाल में चन्द्र और शुक्र यदि त्रिक (६-८-१२) स्थान में हों तो जातक रात्र्यन्ध होता है, सूर्य और शुक्र के साथ यदि लग्नेश त्रिक स्थान में हो तो जन्मान्ध होता है । इसी तरह तात (दशम) अनुज (तृतीय) अम्बा (चतुर्थ) सुत पञ्चम और निज गृहिणी (सप्तम) भाव का स्वामी यदि सूर्य शुक्र और चन्द्रमा से युत होकर त्रिक (६-८-१२) स्थान में हो तो क्रमशः पिता-भ्राता-माता-पुत्र और स्त्री को अन्धे होने का योग होता है । ऐसा विचार कर विद्वानों को फलादेश करना चाहिए ।। ६ ।।

सहजभाव फल—

**भ्रातृस्थानेशभौमौ व्ययरिपुधनस्थानगौ बन्धुहीनः**
**स्वक्षेत्रे सौम्यदृष्टे सहजभवनपे मानवः स्याच्च तद्वान् ।**
**केन्द्रस्थे बन्धसौख्यं शुभविहगयुते स्याददभ्रं नराणां**
**पापैश्चेददन्यथैतत्तदनु निजधिया ज्ञेयमित्थं समस्तम् ।। ७ ।।**

**अन्वयः–** भ्रातृस्थानेश भौमो व्ययरिपु निधनस्थानगौ (भवेत्तदा) बन्धुहीनः स्यात् । सहजभवनपे स्वक्षेत्रे सौम्यदृष्टे मानवः तद्वान (भ्रातृवान्) स्यात् । केन्द्रेस्थे (सहजपे) शुभविहगयुते (तदा) नराणां अदभ्र बन्धुसौख्यं (भवेत्) तदनुपापैः युते चेत् तदैतदन्यथा स्यात् इत्थं निजधिया समस्तं ज्ञेयम् ।। ७ ।।

अथ भ्रातृसम्भवतत्सुखादियोगानाह । भ्रात्रिति । भ्रातृस्थानेशभौमे तृतीयाधिपतिर्भौमो व्ययरिपुनिधनस्थानगौ (१२-६-८) त्रिकस्थौ यदि तदा जातः बन्धुहीनः सामान्य शब्द-निर्देशेन सहोदर बन्धवो विवक्षितास्तै रहित इत्यर्थः । सहजभवनपे सहजाधिपे स्वक्षेत्रे स्वगृहे सौम्यदृष्टे शुभग्रहदृष्टे सति मानवः तद्वान्बन्धुमान् स्यात् । सहजाधिपे शुभग्रहयुते केन्द्रस्थे अदभ्रं बहु बन्धुसौख्यं स्यात् ।

केन्द्रस्थे सहजभवनपे पापग्रहैर्युते चेदन्यथा बन्धुसौख्यं न स्यात् । युतेदृष्टे इत्युपलक्षणम् । इत्थं अमुना प्रकारेण बुद्धिमद्भिर्निजधिया स्वबुद्ध्या समस्तं भावफलं तदनु योगविचारानन्तरं ज्ञेयम् । अयमर्थः योगे सत्यपि योगकर्तृषु भूयसी पापदृष्टिः पापयोगः, योगकर्तृणां नीचास्ततो योगे प्रागुक्तं लक्षणं न स्यात् । इति सहजभावः ।। ७ ।।

**हिन्दी–** तृतीयेश और भौम व्यय-रिपु-निधन (त्रिक) स्थान में हो तो जातक भ्रातृहीन होता है । तृतीयेश यदि स्वराशि में हो और शुभदृष्टि से युक्त हो तो वह भ्रातृयुक्त होता है । तृतीयेश केन्द्र स्थानों में शुभग्रह से युक्त होकर स्थित हो तो निरन्तर भ्रातृसुख प्राप्त होता है । तृतीयेश यदि पापग्रह से युक्त हो तो जातक भ्रातृसुख विहीन होता है । इसी तरह स्वबुद्धयानुसार फलादेश करना चाहिए ।। ७ ।।

चतुर्थभाव फल—

**पातालेशः स्वराशौ शुभखचरयुतो भाग्यनाथेन युक्तः**
**सामन्तः स्यात्ततश्चेत्सुरपतिगुरुणा वाहनेशस्तनुस्थः ।**
**सन्दृष्टो राजपूज्यस्तदनु च हिबुकाधीश्वरो लाभसंस्थो**
**यानं पश्यन्नराणां निवहमभिमतं वाहनानां प्रदत्ते ।। ८ ।।**

**अन्वयः–** पातालेशः स्वराशौ शुभखचरयुतः भाग्यनाथेन युक्तः चेत सामन्तः स्यात् । ततः तनुस्थः वाहनेशः सुरपतिगुरुणा संदृष्टः (तदा) राजपूज्यः तदनु च हिबुकाधीश्वरः लाभसंस्थः (अथवा) यानं पश्यन् नराणां वाहनानां अभिमतं निवहं प्रदत्ते ।। ८ ।।

अथ चतुर्थभावफलं वदन् योगचतुष्टयमाह ! पातालेश इति । पातालेशश्चतुर्थेशः स्वराशौ शुभखचरयुतः शुभग्रहयुक्तः सन भाग्यपेन भाग्यस्वामिना युक्तश्चेज्जातः सामन्तः माण्डलिकः स्यात् । ततो योगानन्तरं ज्ञेयं लग्नस्थो वाहनेशो गुरुणा पूर्णदृष्ट्या दृष्टश्चेत्तदा जातः राज्यपूज्यः राजकृतसम्मानभाजनं स्यात् । तदनु गुरुदृष्टः सुखेशः लाभगश्चेत् यद्वा गुरुदृष्टः सुखेशः यानं पश्यन्भवति तदा वाहनानां निवहं समूहं नराणां अभिमतं प्रदत्ते । इदं

योगद्वयं वा शब्दप्रयोजकैऽपि ज्ञेयमन्ययोगलाभाच्चतुर्थदृष्टिविरहात् योगप्रभवप्रसङ्गात् ।। ८ ।।

**हिन्दी–** चतुर्थेश यदि स्वराशि में शुभग्रह और नवमेश के साथ हो तो जातक सामन्त (मण्डलेश) होता है । चतुर्थेश यदि लग्न में स्थित हो और बृहस्पति से दृष्ट हो तो राजमान्य होता है । यदि बृहस्पति से दृष्ट होकर चतुर्थेश एकादश भाव में हो अथवा बृहस्पति से दृष्ट होकर चतुर्थेश चतुर्थ भाव को देखे तो वह इच्छानुसार वाहन समूह प्रदान करने वाला होता है ।। ८ ।।

गृहप्राप्ति योग—

**स्वक्षेत्रे तुर्यनाथस्तनुपतिसहितः स्यादकस्माद् गृहाप्तिः**
**सौहार्द वा सुहृद्भिस्तदितरगृहगश्चेद् गृहालभ्ययोगः ।**
**यावन्तः पापखेटा धनदशमगृहप्रान्यपैश्चेत्त्रिकस्था**
**युक्तास्तावत् प्रमाणा ज्वलनवशगताः वलेशदाः स्युर्गृहा नुः।।९।।**

**अन्वयः–** तनुपतिसहितः तुर्यनाथः स्वक्षेत्रे (तदा) अकस्माद् गृहाप्तिः वा सुहृद्भिः सौहार्दं । तदितरगृहगश्चेत् गृहालभ्ययोगः यावन्तः पापखेटाः धनदशमगृहप्रान्त्यपैर्युक्ताश्चेत्त्रिकस्थास्तावत्प्रमाणा ज्वलनवशगताः गृहाः नुः वलेशदाः स्युः ।। ९ ।।

गृहप्राप्त्यादियोगानाह । स्वक्षेत्र इति । लग्नेशसहितश्चतुर्थभावनाथः स्वक्षेत्रे चतुर्थभवने चेत्तदा जातस्य अकस्मादयत्नतो गृहाप्तिः गृहलाभः स्यात् । तथा सुहृद्भिर्हितकारकैर्जनैः सौहार्द्रं प्रीतिः सुहृज्जनयुक्तं गृहादि स्तादित्यर्थः । तनुपतियुक्तः चतुर्थनाथः तदितरगृहगः चतुर्थभवनादन्यभवनस्थश्चेत्तदा गृहालभ्ययोगः गृहप्राप्त्यभावः । यावन्तः क्रूरग्रहाः द्वितीयदशम चतुर्थद्वादशनाथैः सहितास्त्रिकस्थाः सहितास्त्रिकस्थाः तावन्तो गृहाः जातस्य नुः नरस्य वह्निवशगता दग्धाः अतएव क्लेशदाः स्युः । अत्र धनेशादीनां चतुर्णां समुदितानामेकयोगो न विवक्षितः । त्रिकभवने यो वा प्रान्त्य सद्भावे सावकाशत्वात् ।। ९ ।।

**हिन्दी–**लग्नेश के साथ चतुर्थेश यदि स्वराशि में हो तो अकस्मात् गृह प्राप्ति और सज्जनों से मैत्री होती है । यदि इससे इतर स्थानों में रहे तो यह योग

नहीं होता है । द्वितीयेश-दशमेश व द्वादशशेश से युत होकर जितने पापग्रह त्रिक (६-८-१२) स्थान में रहें उतने संख्यक गृह नष्ट होते हैं और जातक कष्ट पाता है ।। ९ ।।

वाहन नाशयोग—

**यावन्तो वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयु-**
**स्तावन्तो वा विरामाः परमगुणवतां वाहनानां नृणां स्युः ।**
**क्रूराः पशयन्ति यानं व्ययनिधनगताश्चेत्तदा तद्वदेव**
**प्रज्ञैरादेश्यमेषां खलु शुभकरणं शान्तिकं वाहनानाम् ।। १० ।।**

**अन्वयः–** यावन्तः (पापाः) वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयुः तावन्तो नृणां परमगुणवतां वाहनानां विरामः स्युः । वा व्ययनिधनगताः क्रूराः यानं पश्यन्ति चेत्तदा तद्वदेव फलं स्यात् । प्राज्ञैः एषां वाहनानां खुल शुभकरणं शान्तिकं आदेश्यम् ।। १० ।।

अथ वाहनविरामयोगौ तच्छान्तिकरणं चाह । यावन्त इति । क्रूरा इत्यनुषङ्गः यावन्तः वाहनस्थाः शुभविहगदृशां गोचरा नोभवेयुः शुभग्रह दृष्ट्या न स्युः तावन्तो नृणां परमगुणवतां प्रकृष्टगुणयुक्तानां वाहनानां विरामाः विनाशाः स्युः ।

अथ द्वादशाष्टमगताः क्रूराः यावन्त इत्यनुषङ्गश्चतुर्थं पश्यन्ति चेत्तदा पण्डितैस्तद्वदेव दृष्ट क्रूरग्रहे सङ्ख्याप्राये स्ववाहनानां विरामाः स्युरिति ज्ञेयम् । तत्र वाहनानां शुभकरणं शान्तिकं प्राज्ञैः आदेश्यं विधेयमितिशेषः ।। इतिचतुर्थभावः।। १० ।।

**हिन्दी–** शुभग्रह की दृष्टि से वंचित जितने पापग्रह चतुर्थ भाव में रहें उतने ही वाहनों का नाश होता है । द्वादश और अष्टमभाव में जितने पापग्रह स्थित होकर चतुर्थ भाव को देखें उतने संख्यक अच्छे वाहनों का नाश होता है । ऐसा दुर्योग होने पर समयानुसार वाहन हेतु शुभ शान्त्यर्थ कृत्य का आदेश विद्वानों को करना चाहिए ।। १० ।।

पञ्चमभाव फल—

**विद्यास्थानाधिपो वा बुधगुरुसहितश्चेत् त्रिके वर्तमानो**
**विद्यहीनो नरः स्यादथ नवमनिजक्षेत्र केन्द्रेषु तद्वान् ।**
**बालत्वं वृद्धता वा यदि गगनसदां जन्मकाले तदा स्यात्**
**प्रज्ञामान्द्यं नराणामथ यदि विहगः स्वर्क्षगो दोषहृत्स्यात् ।। ११ ।।**

**अन्वयः–** विद्यास्थानाधिपो वा बुधगुरु सहितः (पञ्चमेशः) त्रिके वर्तमानो नरः विद्याहीनो स्यात् । अथ नवमनिजक्षेत्र केन्द्रेषु (पञ्चमेशः) चेत् तद्वान भवति । यदि जन्मकाले गगनसदां बालत्वं वृद्धता वा तदा नराणां प्रज्ञामान्द्यं स्यात् । अथ यदि विहगः स्वर्क्षगः (चेत्तदा) दोषहृत् स्यात् ।। ११ ।।

अथ पञ्चम भावफलं विवक्षुर्निरुपायेन विद्याबुद्धियोगानाह । विद्येति । विद्यास्थानाधिपः पञ्चमेशः केवलो बुधगुरुसहितो वा त्रिके वर्तमानश्चेत्तदाजातो विद्याहीनः । त्रिकस्थे पञ्चमेशे बुधगुरुयोगे विद्याद्यनुकूलो नास्तीति 'वा' शब्देन द्योतितम् । अथ पञ्चमेशः पञ्चमनवमकेन्द्रेषु स्थितश्चेत्तदा जातः विद्यावान् । बुधगुरुयोगे विद्यावत्वं किमुत वक्तव्यमिति गम्यते । अथ जन्मकाले प्रज्ञायोग कर्तृणां गगनसदां ग्रहाणां बालत्वं वृद्धता वा यदि तदा जातानां प्रज्ञामान्द्यं अल्पबुद्धिः स्यात् । यदि बालो वृद्धो वा ग्रहः स्वक्षेत्रगः तदा दोषहृत् प्रज्ञामान्द्यत्वप्रयोजकदोषं दूरीकुर्यादित्यर्थः ।। ११ ।।

**हिन्दी–** पञ्चमेश एकाकी या बुध-गुरु के साथ त्रिक (६-८-१२) स्थान में रहे तो जातक विद्याहीन होता है । पञ्चमेश यदि एकाकी या बुध-गुरु के साथ स्वराशि में या नवमभाव में या केन्द्र में रहे तो विद्वान होता है । यदि जन्म समय में पञ्चमेश बाल या वृद्ध अवस्था में हो तो जातक मन्दबुद्धि होता है परन्तु बाल या वृद्ध होते हुए भी यदि स्वराशि का रहे तो वह मन्दबुद्धि दोष को नष्ट कर देता है ।। ११ ।।

मूकत्व-सन्तानहीन योग—

**वाकस्थानेशो गुरुर्वा व्ययरिपुविलयस्थानगो वग्विहीन-**
**श्चैवं पित्रादिकानां पतय इह युता मूकता स्याच्च ताभ्याम् ।**
**वागीशात् पञ्चमेशस्त्रिकभवनगतः पुत्रधर्माङ्गनाथा**
**रन्ध्रे द्वेष्यान्तिमस्था यदि जनुषि नृणामात्मजानामभावः ।। १२ ।।**

**अन्वयः–** वाक्स्थानेशो वा गुरुः व्ययरिपु विलयस्थानगः (तदा) वाग्विहीन स्यात् । एवं च पित्रादिकानां पतयः ताभ्यां युताः चेत्तदा तेषां इह मूकता स्यात् । यदि जनुषिः वागीशात्पञ्चमेशः त्रिकभवनगतः (तथा)पुत्रधर्माङ्गनाथाः रन्ध्रद्वेष्यान्तिमस्थाः (स्यात्तदा) नृणां आत्मजानां अभावः स्यात् ।। १२ ।।

अथ मूकत्त्वसन्तानाभावयोगानाह । वाक्स्थान इति । वाक्स्थानेशः पञ्चमेशो गुरुर्वा व्ययरिपुविलयस्थानगस्त्रिकस्थश्चेत्तदा वाग्विहीनः मूकः स्यात् । अथ पित्रादि मूकतायोगमाह - एवं प्रकारेण पित्रादिभावानां दशमभावादिराशीनां पतयस्ताभ्यां पञ्चमेशगुरुभ्यां युतास्त्रिके तिष्ठन्ति चेत्तदा तातादीनां मूकत्वं स्यात्। आदिशब्दात् अनुजादयो ज्ञेयाः । अथ जन्मनि जीवात् जीवाधिष्ठितराशेः पञ्चमेशः त्रिकस्थः पुत्रधर्माङ्गनाथाः पञ्चमनवमलग्नेशाः जन्मलग्नात् त्रिकस्थाः यदि तदा पुत्राणामभावो वाच्यः ।। १२ ।।

**हिन्दी–** बृहस्पति पञ्चमेश होकर यदि व्यय-षष्ठ या अष्टम (त्रिक) भाव में रहे तो जातक वाणीहीन होता है । इसी तरह पिता-भाई-बन्धु-स्त्री-पुत्रादि के भावाधिपति यदि बृहस्पति के साथ त्रिक स्थान में रहें तो वे वाणीहीन होते हैं । बृहस्पति जिस राशि में हो उससे पाँचवें स्थान का स्वामी यदि त्रिक (६-८-१२) स्थान में हो अथवा लग्नेश-पञ्चमेश तथा नवमेश त्रिकस्थान में रहें तो जातक को पुत्रों का अभाव होता है ।। १२ ।।

सन्तान योग—

**किञ्चित्कालं विलम्बः शुभखगसहितास्तेऽथ कर्के सुतर्क्षे**
**चन्द्रे कन्याप्रजावान् प्रमित-तनयवांश्चाथ देवेन्द्रपूज्यात् ।**
**क्रूरश्चेत् पञ्चमस्थः गुरुरपि सुतगः स्यात्तदाऽपत्यहीन-**
**श्छायापुत्रः स्वेगेहाद् यदि भवति सुते सूनुरेकस्तदानीम् ।।१३ ।।**

**अन्वयः-** ते (त्रिकोणेश- लग्नेश) यदि शुभखगसहिताः स्युस्तदा किंचित्कालं विलम्बः स्यात् । अथचन्द्रे कर्के सुतर्क्षे (चेत्) कन्याप्रजावान् प्रमिततनयवाँश्च देवेन्द्रपूज्यात् पञ्चमस्थः क्रूरः (स्यात्) गुरुः अपि सुतगः(तदा) अपत्यहीनः स्यात् । यदि छायापुत्रः स्वगेहात् सुते तदानीं एकः सूनुः भवति।।१३।।

अथ सन्तानयोगमाह । किञ्चित्कालमिति । ते पुत्रधर्माङ्गनाथा शुभखगससहिताश्चेत्तदा सन्तानोत्पत्तौ किञ्चित्कालं विलम्बः स्यात् । शुभग्रहदशान्तर्दशाबलापेक्षया विलम्ब इति भावः । अथ कर्कराशौ पञ्चमभावे चन्द्रश्चेत्तदा कन्याप्रजावान् अथवा प्रमित तनयवान् स्वल्पापत्यः स्यात् । अथ देवेन्द्रपूज्यात् जीवात्पञ्चमस्थः क्रूरश्चेत् जीवोऽपिलग्नात् पञ्चमगस्तदापत्यहीनः सन्तानरहितः स्यात् । यदि स्वेगहात्स्वराशितः पञ्चमे छायापुत्रः शनिश्चेत्तदा एकपुत्रः स्यात् । अत्र सम्पूर्णदृष्ट्या शुभकृतस्य शनेःस्वराशेः पुत्रभवने दृष्ट्यैकपुत्रयोगस्तदा रविभौमयोः स्वगृहात्पञ्चमस्थयोरेकपुत्रत्त्वं किमुत वक्तव्यमिति गूढोऽभिप्रायः ।। १३ ।।

**हिन्दी–** लग्नेश-पञ्चमेश व नवमेश यदि शुभग्रहों से युक्त हों तो सन्तान प्राप्ति में विलम्ब होता है । पञ्चम भाव में कर्क का चन्द्रमा रहे तो कन्या सन्तति या अल्प सन्तति होती है जिसमें पुत्र संख्या कम होती है । पञ्चम भाव में बृहस्पति हो और इससे पञ्चम स्थान (नवम) में कोई पापग्रह हो तो संतानाभाव होता है । यदि शनि अपनी राशि (मकर-कुम्भ) से पञ्चम स्थान में रहे तो एक पुत्र होता है ।। १३ ।।

सन्तानयोग—

**कुम्भे चेत् पञ्चपुत्रास्तदनु च मकरे नन्दनेऽप्यात्मजाः स्यु-**
**स्तिस्त्रौ भौमः सुतानां त्रितयमथ सुतादायको रौहिणेयः ।**
**इत्थं काव्यः शशाङ्को जनुषि च गुरुणा केवलेनैव पुत्राः**
**पञ्च स्युः केतुराह्वोः क्रियवृषभवने कर्कटे नो विलम्बः ।। १४ ।।**

**अन्वयः-** पञ्चमे कुंभे चेत् नन्दने पञ्चपुत्राः तदनु च मकरे (यदा) तिस्त्रआत्मजाः स्युः । तत्र भौमः (पञ्चमे मकरे तदा ) सुतानां त्रितय । रौहिणेयः काव्यः शशाङ्कः इत्थं जनुषि सुतदायकः स्यात् । केवलेनैव गुरुणा पञ्चपुत्राः स्युः क्रियवृषभवने कर्कटे (तदा) केतु राह्वोः नो बिलम्बः ।। १४ ।।

अथ अन्ययोगानाह । कुम्भ इति । नन्दने पञ्चमभावे कुम्भे छायासूनुरित्यनुषङ्गः, यदि तदा पञ्च पुत्राः स्युः । मकरे आत्मजाः तिस्त्रः मकरस्य स्त्रीराशित्वादितिभावः । भौमे मकरे चेदित्यनुषङ्गः सुतानां त्रितयं त्रयं स्यात् । अथ रौहिणेयः बुधः पञ्चमे सुतादायकः कन्याप्रदः । इत्थं शुक्रश्चन्द्रोऽपि पञ्चमे सुतादायकः । एवं केवलेनग्रहयोगरहितेन पञ्चमस्थेन गुरुणा पञ्च पुत्राः स्युः। पञ्चमे मेषे वृषे कर्के वा केतुराह्वोरेकतरे सति नो विलम्बः सन्तानोत्पत्तौ प्रतिबन्धो न भवतीत्यर्थः । नो विलम्बः इत्यनेन सूचितं मकरकुम्भातिरिक्तराशौ पञ्चमे शनौ मकरमन्तरेण तत्रस्थे भौमे, क्रियादिराशीन्विहाय पञ्चमे राहौ वा केतौ सन्ततेर्विलम्बः एवेति भावः ।। १४ ।।

**हिन्दी–** पञ्चमभाव में यदि शनि कुम्भराशि का रहे तो पाँच पुत्र होते हैं। पञ्चम भाव में यदि शनि मकर राशि का रहे तो तीन पुत्रियां होती है । पञ्चम भाव में मकर राशि का भौम रहे तो तीन पुत्र होते हैं । पञ्चम भाव में बुध-शुक्र या चन्द्र हों तो कन्या सन्तति होती है । पञ्चम भाव में एकाकी बृहस्पति यदि हो तो पाँच पुत्र होते हैं । पञ्चम भाव में यदि मेष-वृष या कर्क राशि हो और उसमें राहु या केतु रहें शीघ्र सन्तान प्राप्ति होती है ।। १४ ।।

सन्तान विलम्बकारक योग—

**पापो वा वासवेज्यः सुखभवनगतः पञ्चमे वाऽष्टमे वा**
**शीतांशुः सन्तते स्यात् खगुणमितसमातुल्य एव प्रबन्धः ।**
**यावन्तः पापखेटास्तनयगृहताः सौम्यदृष्ट्या वियुक्ता**
**स्तावद्वर्षप्रमाणो नियतमिह भवेत् सन्ततेर्वा विलम्बः ।। १५ ।।**

**अन्वयः–** पापो वा वासवेज्यः सुखभवनगतः शीतांशु पञ्चमे अष्टमे वा स्यात् तदा सन्ततेः खगुणमित समातुल्यं एव प्रबन्धः । अथवा यावन्तः पापखेटाः तनयगृहगताः सौम्यदृष्ट्या वियुक्तास्तावद्वर्षप्रमाणो इह नियतं सन्ततेः बिलम्बः भवति ।। १५ ।।

ननु कतिवर्षाणि विलम्ब इत्याह । पापो वेति । पापग्रहो जीवो वा चतुर्थस्थः पञ्चमेऽष्टमे वा चन्द्रो भवति तर्हि खगुणमितसमातुल्यः त्रिंशद्वर्षमितप्रबन्धः सन्ततेरित्यनुषगंः प्रकृष्टोबन्धः । शुभग्रहादृष्ट्या वियुक्ताः यावन्तः पञ्चमस्थाः क्रूरग्रहाः स्युः ''बलाधीनफलाः खगा" इत्युक्तप्रकारैः स्थानदिगादिबलरूपकैः किं तदिति ध्येयं तावद्वर्षप्रमाणं सन्ततेर्निश्चयेन विलम्बः स्यादित्यर्थः ।। १५ ।।

**हिन्दी–** चतुर्थ भाव में पापग्रह या बृहस्पति हो और चन्द्रमा पञ्चम या अष्टम भाव में हो तो सन्तान प्राप्ति में ३० वर्ष का बिलम्ब होता है । पञ्चम भाव में शुभग्रह की दृष्टि से वंचित जितने पापग्रह रहें उतने वर्ष तक निश्चित रूप में सन्तान की प्राप्ति में विलम्ब होता है ।। १५ ।।

परिहार—

**तत्प्राप्तिर्धर्ममूला तदनु बुधकवी शङ्करस्याभिषेका-**
**च्चन्द्रश्चेत्तद्वदेव त्रिदिवपतिगुरुर्मन्त्रयन्त्रौषधीनाम् ।**
**सिद्ध्या मन्दारसूर्या यदि शिखितमसी तत्र वंशेशपूजा**
**कार्याऽऽम्नायोक्तरीत्या बुधगुरुनवपाः क्षिप्रमेवात्र सिद्धिः ।।१६।।**

**अन्वयः–** तत्प्राप्तिः धर्ममूला तदनुबुधकवी (प्रतिबन्धकौ तदा) शंकरस्याभिषेकात् चन्द्रश्चेत्तद्वदेव त्रिदिवपति गुरुर्मन्त्रयन्त्रौषधीनां सिद्ध्या यदि

मन्दारसूर्याः शिखितमसी (तदा) तत्र आम्नायोक्तरीत्या वंशेशपूजा कार्या । बुध गुरु नवपाः क्षिप्रमेवात्र सिद्धिः ।। १६ ।।

अथ प्रतिबन्धकभंजकं सन्तानोपायमाह । तत्प्राप्तिरिति । तत्प्राप्तिः सन्ततिप्राप्तिः धर्ममूला श्रुतिस्मृति विधिगतो धर्मः हेतुर्यस्याः सा तथा आदित्यसप्तमीव्रत, शङ्कराराधन, सन्तानगोपालमन्त्रजपं हरिवंशश्रवणादि विहितं धर्ममूलेतिभावः । अत्र विशेषः । तदनु तत्पश्चाद्बुधकवी विलम्बप्रयोजकौ चेत् शङ्करस्याभिषेकाद्रुद्राध्यायोक्तं मन्त्रकरणाभिषेकात्तत्प्राप्तिरित्यनुषगंः । चन्द्रश्चेत्पूर्ववज्ज्ञेयम् । गुरुश्चेत्तथा यदा तदा मन्त्रयन्त्रौषधीनां सिद्ध्या सिद्धिशब्दो मन्त्रादिभिः प्रत्येकं सम्बध्यत्ते । मन्त्रसिद्ध्यां यन्त्र सिद्ध्या औषधीसिद्ध्येति । मन्त्राचरणेन सन्तानगोपाल, मृत्युंजयादयो मन्त्रास्दतदनुष्ठानेन यन्त्राणि यन्त्रग्रन्थोक्तानि तेषां सिद्ध्या औषध्यो लक्ष्मणाद्यास्तासां सिद्धिः विधिवदनुष्ठानसाध्यफलेत्यर्थः । शनिभौमसूर्यराहूणां मध्ये कस्यचित्प्रति-बन्धकत्वे तत्र वंशेशपूजा कुलदेवतापूजनम् आम्नायोक्तरीत्या कार्या। आम्नाय शब्दोऽत्र वेदस्मृति पुराणाद्युपलक्षणार्थः । तत्रापि विशेषः - बुधगुरुनवमस्थानपाः प्रतिबन्धकाश्चेदुमानुष्ठानात् क्षिप्रमेव सिद्धि स्यात् । इति पञ्चम भावः ।। १६ ।।

**हिन्दी–** सन्तति प्राप्ति धर्माचरण से होती है । सन्तति प्राप्ति में यदि बुध-शुक्र या चन्द्र प्रतिबन्धक हों तो शिव अभिषेक करने कराने से, बृहस्पति प्रतिबन्धक हों तो मन्त्र-यन्त्र और औषधि प्रयोग से, शनि-भौम या राहु-केतु प्रतिबन्धक हों तो वैदिक विधि से अपने वंशेश (कुलदेव) की पूजा अर्चना करने से, बुध-गुरु या नवमेश प्रतिबन्धक हों तो अनुष्ठानादि से शीघ्र ही सन्तान प्राप्ति होती है (यहाँ नवमेश या गुरु के प्रतिबन्धक होने पर पार्वती का अनुष्ठान बतलाया गया है ।) ।। १६ ।।

षष्ठभावफल—

**षष्ठेशे पापयुक्ते तनुनिधनगते नुः शरीरे व्रणाः स्यु-**
**श्चादेश्यं तज्जनित्रीजनकसुतवधूबन्धुमित्रादिकानाम् ।**
**इत्थं तत्स्थानगामी शिरसि दिनमणिश्चानने शीतभानुः**
**कण्ठे भूमीतनुजो हृदि शशितनयो वाक्पतिर्नाभिमूले ।। १७ ।।**

**अन्वयः–** षष्ठेशे पापयुक्ते तनुनिधनगते नुः शरीरे व्रणाः सयुः । इत्थं तज्जनित्री जनक सुत वधू बन्धु मित्रादिकानां (व्रणादि) आदेश्यम् तत्स्थानगामी दिनमणिश्चेत् तदा शिरसि शीतभानुश्चेत् आनने भूमितनुज-श्चेत् कण्ठे शशितनयश्चेत् हृदि वाक्पतिश्चेन्नाभिमूले व्रणाः स्युः ।। १७ ।।

अथ रिपुभावफलं वक्तुकामस्तावद्व्रणरोगानाह । षष्ठेश इति । पापग्रहयुते षष्ठेशे लग्नाष्टमगते सति नुः मनुजस्य शरीरे व्रणाः स्युः इत्थमुक्तप्रकारेण जनित्र्यादि भावानामीशे पापयुक्ते तनुनिधनगते तेषां व्रणाः स्युरित्यादेश्यं वक्तव्यम् ।

अङ्ग विशेष व्रणानाह - तत्स्थानगामीतनुनिधनगतः षष्ठेशो दिनमणिः सूर्यश्चेत् शिरसि व्रणः, चन्द्रश्चेन्मुखे, भौमश्यचेत्कण्ठे, बुधश्चेद्हृदये, वाक्पतिश्चेन्नाभिमूले व्रणाः स्युः ।। १७ ।।

**हिन्दी–** यदि षष्ठेश पापग्रह से युत होकर लग्न में या अष्टम भाव में हो तो शरीर में व्रण (घाव-फोड़ा-फुन्सी) होता है । इसी प्रकार मातृ-पितृ-सुत-बन्धु-स्त्री और मित्र भाव के स्वामी ग्रह यदि पापग्रह से युत होकर लग्न या अष्टम भाव में रहें तो माता-पिता-सुत-बन्धु-स्त्री और मित्र के शरीर में व्रण होता है । यदि लग्न या अष्टम भाव में सूर्य षष्ठेश होकर रहे तो शिर में, चन्द्र रहे तो मुख में, भौम रहे तो कण्ठ में बुध रहे तो हृदय में और बृहस्पति रहे तो नाभिमूल में व्रण होता है ।। १७ ।।

व्रण योग—

**नेत्रे पृष्ठे च शुक्रो दिनकरतनयः स्यात् पदे चाधरे चेत्**
**केतुर्वा सैंहिकेयस्तदनु तनुपतिभौमविद्क्षेत्रसंस्थः ।**
**आभ्यामालोकितः सन् भवति हि कतिचित्स्थानगो वा तदानीं**
**नेत्रे रोगी नरः स्यात् प्रवरमतियुतैर्होरिकैर्ज्ञेयमेवम् ।। १८ ।।**

**अन्वयः–** षष्ठेशस्तनुनिधनगताः शुक्रश्चेत् नेत्रे पृष्ठे च दिनकरतनयश्चेत् पदे सैंहिकेयः केतुर्वा (चेत्) अधरे व्रणाः स्युः । तदनु भौमवित्क्षेत्रसंस्थः तनुपतिः आभ्याम् आलोकितः सन् कतिचित् स्थानगश्चेत्तदानीं नरः नेत्ररोगी स्यात् एवं प्रवरमतियुतैः हौरिकैः ज्ञेयम् ।। १८ ।।

**नेत्र इति** । शुक्रश्चेन्नेत्रमूले पृष्ठे च, शनिश्चेत् पदे चरणे, राहुः केतुर्वा अधरे व्रणाः स्युः इत्यग्रिमश्लोकेनान्वयः । अथ नेत्रव्याधियोगः तदनु भौमबुधराशिस्थो लग्नेशः भौमबुधदृष्टः कातिचित्स्थानगोऽपि वा यत्र कुत्र वा स्यात्तदानीं जातः नेत्ररोगी स्यात् । प्रवरमतियुतैर्हौरिकैरेवं ज्ञेयम् ।। १८ ।।

**हिन्दी–** यदि लग्न या अष्टम भाव में षष्ठेश होकर शुक्र रहे तो आँख और पीठ में, शनि रहे तो पाँव में, केतु या राहु हो तो अधरोष्ठ में व्रण होता है । यदि लग्नेश भौम या बुध की राशि (मेष-वृश्चिक-मिथुन-कन्या) में स्थित हो और भौम या बुध से दृष्ट हो तो अथवा लग्नेश किसी भी राशि में स्थित होकर भौम या बुध से दृष्ट हो तो जातक नेत्ररोगी होता है । इस तरह श्रेष्ठ होराविदों को समझना चाहिए ।। १८ ।।

षष्ठभावानुसार योग—

**षष्ठेशे लग्नयाते भवति हि मनुजो वैरिहन्ता धनस्थे**
**पुत्रात्तार्थोऽतिदुष्टः सहज भवनगे ग्रामदुःखाकरः स्यात् ।**
**नाभिस्थाने च रोगी तनुनिधनपती शत्रुभावस्थितौ ना**
**नेत्रे वामेतरे स्यादसुरकुलगुरुः सूर्यजस्त्वङ्घ्रिरोगी ।। १९ ।।**

**अन्वयः–** षष्ठेशे लग्नयाते मनुजः हि वैरिहन्ता भवति । धनस्थे पुत्रात्तार्थो अतिदुष्टः सहजभवनगे ग्रामदुःखाकरः नाभिस्थाने रोगी च स्यात् ।

तनुनिधनपती शत्रुभावस्थितौ (चेत्तदा) ना वामे नेत्रे, असुरकुलगुरुश्चेत्तदा इतरे (दक्षिणे) रोगी स्यात्, सूर्यजस्त्वङ्घ्रिरोगी (स्यात्) ।। १९ ।।

अथान्ययोगाः । षष्ठेश इति । षष्ठभावधिपे लग्नस्थे जातः शत्रुहन्ता स्यात् । धनस्थे षष्ठेशे पुत्रात्तार्थः पुत्रेणात्तः गृहीतः अर्थो धनं यस्य सः पुत्रहृतधन इत्यर्थः, अतिदुष्टश्च स्यात् । सहजभवनगे ग्रामस्य दुःखाकरः नाभौ रोगी च स्यात् । लग्नाष्टमपती षष्ठस्थौ ना पुरुषः नेत्ररोगी स्यात् । अत्र वामेतरशब्दोपादानादत्र वाम इति गम्यते । शुक्रः षष्ठेष्टमे इतरे दक्षिणनेत्रे रोगी शनिः पृष्ठे चरणे रोगी स्यात् ।। १९ ।।

**हिन्दी–** यदि षष्ठेश लग्न में हो तो जातक शत्रुहन्ता होता है । षष्ठेश द्वितीय भाव में हो तो दुष्टप्रवृत्ति होती है और पुत्र द्वारा संचित धन का अपहरण होता है । षष्ठेश तृतीय भाव में हो तो ग्राम के लिए दुःखदायी और नाभी रोग से युक्त होता है । षष्ठ भाव में लग्नेश या अष्टमेश हों तो वामनेत्र में और यदि शुक्र (षष्ठभाव में) रहे तो दक्षिण नेत्र में रोग होता है । षष्ठ भाव में यदि शनि रहे तो पैर में कष्ट होता है ।। १९ ।।

षष्ठभावजन्य योग—

**दन्ते दन्तछदे वा कुमुदपतिरिपुः संस्थितः षष्ठभावे**
**केतुर्वा लग्ननाथः कुजबुधभवने संस्थितः क्वापि दृष्टः ।**
**स्वेन प्रत्यर्थिना वा भवति जनुषि चेदासनार्धे सरोग-**
**स्तौ भूमीसूर्यपुत्रौ यदि रिपुगृहगौ तद्भवः स्याद्गदो नुः ।। २० ।।**

**अन्वयः–** जनुषि यदि कुमुदपतिरिपुः षष्ठभावे संस्थितः तदा दन्ते दन्तेच्छदे वा (रोगः), लग्ननाथः कुजबुधभवने क्वापि संस्थितः स्वेन प्रत्यर्थिना दृष्टः (तदा) आसनार्द्ध सरोगः यदि तौ भूमि सूर्य पुत्रौ रिपुगृहगौ (चेत्तदा) तद्भवो नुः गदः स्यात् ।। २० ।।

अथान्ययोगाः । दन्त इति । राहुकेतु शत्रुभावे चेद्दन्ते दन्तच्छदे ओष्ठे वा रोगी स्यात् । भौमबुधराशिस्थितो लग्नेशः स्वेनप्रत्यर्थिना स्वशत्रुणां पूर्णदृष्ट्या दृष्टः यत्र कुत्रापि स्यात्तदा आसनार्द्धे गुदसमीपे वा रोगी स्यात् । यदि तौ

भूमिसूर्यपुत्रौ रिपुगृहगौ षष्ठभावसंस्थौ चेत्तदा तद्भवः नुः पुरुषस्य गदो रोगः स्यात्। भूमिपुत्रे रुधिर विकारः शनावितरः (वायुविकारः) स्यादित्यर्थः।।२०।।

**हिन्दी–** षष्ठ भाव में राहु केतु रहें तो दाँत या होठ में रोग होता है लग्नेश यदि भौम या बुध की राशि (मेष-वृश्चिक-मिथुन-कन्या) का होकर कहीं भी स्थित हो और शत्रु से दृष्ट हो तो आसनार्ध (मलद्वार के समीप) में रोग होता है । षष्ठ भाव में यदि भौम रहे तो रक्तविकार एवं यदि शनि रहे वायुविकार होता है ।। २० ।।

षष्ठभावानुसारयोग—

**प्रालेयांशौ रिपुस्थे खलखगसहिते मानवो रोगवान् स्यात्**
**क्रूरैर्निष्पीडितश्चेत्तनुसदनगतः शीतरश्मिस्तदानीम् ।**
**क्रूरे केन्द्रालयस्थे यदि शुभविहगैर्नेक्षिते रोगवान् स्यात्**
**तस्मिन् काव्यालयस्थे कुजगुरुकविभिर्नेक्षिते तद्वदेव ।। २१ ।।**

**अन्वयः–**प्रालेयांशौ खलखगसहिते रिपुस्थे मानवः रोगवान स्यात् । चेत्क्रूरैर्निष्पीडितः शीतरश्मिः तनुसदनगतश्चेत् तदानीं मानवः रोगवान् स्यात् । क्रूरे केन्द्रालयस्थे शुभविहगैः नेक्षिते तदा रोगवान् स्यात् । तस्मिन (पापे) काव्यालयस्थे कुजगुरुकविभिः नेक्षिते तद्वदेव रोगवान स्यात् ।। २१ ।।

प्रालेयांशाविति । तथा प्रालेयांशौ चन्द्रे खलखगसहिते पापग्रहयुक्ते शत्रुभावस्थे सति रोगवान् स्यात् । क्रूरैर्निष्पीडिते शनिप्रभृतिभिः क्रूरग्रहैः योगेनदृष्ट्या वा पीडिते तनु सदनगते लग्नगे तस्मिन् शीतकरेचन्द्रे तद्वान् रोगी स्यात् । शुभग्रहदृष्टिरहितः केन्द्रगः क्रूरश्चेद् रोगवान् स्यात् । तस्मिन् क्रूरे शुक्रराशिसंस्थे कुजशुक्रगुरुभिर्न दृष्टे तद्वदेव रोगवानेव स्यात् । अत्र यद्यपि विशेषो नोक्तस्तथापियोगकर्तृगृहस्वामि कफवातपित्तादिकोपजन्यो विशेषरोगो ज्ञेयः ।। २१ ।।

**हिन्दी–** पापग्रह से युत होकर चन्द्रमा षष्ठ भाव में रहे तो अथवा पापग्रह से पीड़ित चन्द्रमा लग्न में रहे तो अथवा पापग्रह केन्द्र (१-४-७-१०) में हों और शुभग्रह की दृष्टि से रहित हों तो, अथवा पापग्रह शुक्र की राशि

(वृष-तुला) में हों और भौम-गुरु-शुक्र की दृष्टि से रहित हों तो जातक रोगयुक्त होता है ।। २१ ।।

षष्ठभावजन्ययोग—

**पुंलग्ने स्वीयतुङ्गे रिपुभवनपतौ वीक्षितेऽसन्नभौगै-**
**रङ्गे नूनं नराणामरिजनवशतः स्याद्गदो गूढ़रूपः ।**
**रिःफस्थाने स्थिते चेदरिसदनपतौ सिंहिकापुत्रयुक्ते**
**किंवा सप्ताश्वयुक्ते परगृहवसतिर्नीचवत्तिर्नरः स्यात् ।। २२ ।।**

**अन्वयः—**रिपुभवनगतौ पुंलग्ने स्वीयतुङ्गे असन्नभोगैः वीक्षिते नूनं नराणामरिजनवशतः गूढरुपः गदः स्यात् । अरिसदनपतौ सिंहिकापुत्रयुक्ते किंवा सप्ताश्वयुक्ते रिःफस्थाने स्थिते चेत् नरः परगृह वसतिः नीचवृत्तिः स्यात् ।। २२ ।।

पुँल्लग्न इति । षष्ठेशे पुंराशिलग्ने स्वोच्चे वा पापग्रहैर्दृष्टे सति नराणां जातानां अङ्गे शरीरे अरिजनवशतः शत्रुजनकारितः गूढरूपः प्रच्छन्नः गदो रोगः स्यात् । अत्र ग्रहतुङ्गराशीनां प्रायः स्त्रीराशित्वात् पुंलग्ने वा शब्दप्रयोगो ज्ञायते । षष्ठेशो राहुयुक्तो यद्वा सूर्ययुक्तः द्वादशे वा स्थितः तदा जातो नरः परगृहवासी नीचवृत्तिश्च स्यात् । इति षष्ठभावः ।। २२ ।।

**हिन्दी—** षष्ठेश यदि पुरुषराशि (मे. मि. सि. तु. ध. कु.) में या स्वोच्च राशि में हो और पापग्रह की दृष्टि से युक्त हो तो जातक के शरीर में शत्रुओं द्वारा किया गया कोई घातक घाव या चिन्ह अवश्य होता है । षष्ठेश यदि राहु या सूर्य के साथ द्वादशभाव में रहे तो जातक दूसरे के घर में निवास करने वाला और नीचकर्मी होता है ।। २२ ।।

सप्तमभाव फल—

**यावन्तो वा विहङ्गा मदनसदनगाश्चेन्निजधीशदृष्टा-**
**स्तावन्तो नुर्विवाहास्त्वथ सुमतिमता ज्ञेयमित्थं कुटुम्बे ।**
**कार्यो होरागमज्ञैरधिकबलवतां खेचराणां हि योगा-**
**दादेश्य तत्र वीर्य रविविधुकुभुवामङ्गदिक् शैलसंख्यम् ।। २३ ।।**

**अन्वयः–** अथ यावन्तो विहङ्गा मदनसदनगाः निजाधीशदृष्टाः चेत्तावन्तो नुः विवाहः स्युः वा इत्थं सुमतिमता कुटुम्बेऽपि ज्ञेयम् । हि अधिकबलवतां खेचराणां योगात् होरागमज्ञैः (विमर्शः कार्यः) । तत्र रविविधु कुभुवामङ्गदिक् शैलसंख्यं वीर्यमादेश्यम् ।। २३ ।।

अथ सप्तमभावफलं निरूपयिष्यन् विवाहयोगानाह । यावन्त इति । यावन्तो ग्रहाः सप्तमस्थाः सप्तमेशेन दृष्टाः तावन्तो विवाहाः नुः पुरुषस्य ज्ञेयाः । सुमतिमता जन्मलग्नाभिज्ञेन दैवज्ञेन एवमुक्तप्रकारेण कुटुम्बे जनकभ्रात्रादौ ज्ञेयम्।

होरागमज्ञैर्जातकशास्त्रविद्भिरधिकबलवतां ग्रहाणामेवं योगाद्विचारः कार्यः । तत्राधिक बलं रविविधुकुभुवां सूर्यचन्द्रभौमानां अङ्गदिक् शैलसङ्ख्य मादेश्यं, सूर्यस्य षड्रूपाणि चन्द्रस्य दशरूपाणि भौमस्य सप्तरूपाणि अन्येषां षड्रूपाण्येव ''अङ्गरुपाधिको बलीति'' पद्धतिवचनात् ।। २३ ।।

**हिन्दी–** सप्तमभाव में जितने ग्रह सप्तमेश से दृष्ट हों उतने ही जातक के विवाह होते हैं । इसी प्रकार बुद्धिमानों को कुटुम्बादि (भ्राता-बन्धु आदि) भावों में भी जानना चाहिए । ऐसा विचार होराशास्त्रज्ञों को अधिक बलवान ग्रहानुसार ही करना चाहिए । ऐसा विचार करने में यहाँ सूर्य का बल ६, चन्द्र का १०, भौम का ७ और बुध-गुरु-शुक्र व शनि का ६ बल माना जाता है।।२३।।

सप्तमभावजन्ययोग—

**केन्द्रस्था वा त्रिकोणे यदि खलु गृहिणीकारकाख्या नभोगाः**
**कामार्थेशौ निजर्क्षे परिणयनविधिः स्यात्तदानीं नुरेकः ।**
**जायाधीशः कुटुम्बाधिपतिरपि युतश्चेत्त्रिके गर्हिताख्यै-**
**र्यावद्भिः शुक्रयुक्तो नियतमिह भवेत् तावतीनां विरामः ।। २४ ।।**

**अन्वयः—** यदि गृहिणी कारकाख्याः नभोगाः केन्द्रस्थाः वा त्रिकोणे खलु कामार्थेशौ निजर्क्षे तदानीं नुः एक परिणयनविधिः स्यात् । जायाधीशः कुटुम्बाधिपति अपि शुक्रयुक्तः यावद्भिः गर्हिताख्यः युतः त्रिके भवेत् तावतीनां इह नियतं विरामः भवेत् ।। २४ ।।

केन्द्रस्था इति । गृहिणीकारकाः सप्तमभावे शुभग्रहाः **शुक्रेन्दुजीवशशिजैः सकलैस्त्रिभिर्वा द्वाभ्यां कलत्रभवने च तथैककेन। एषां गृहेऽपि च गणेऽपि विलोकिते वा सन्ति स्त्रियो मदनभावपतिस्वभावाः।।** (सारा. ३४।४५)-

इति कल्याणवर्मवचनात् । एते केन्द्रस्थाः वा त्रिकोणे स्युः तथा सप्तमद्वितीयपती स्वभवने स्यातां तदा जातस्य नुः पुरुषस्य परिणयनविधिः विवाहः एकः स्यात् । सप्तमभावाधीशः द्वितीयाधिपो वा शुक्रयुक्तः यावद्भिः क्रूरग्रहैर्दृष्टः सहितः त्रिके स्यात् तावतीनां स्त्रीणां विरामो नाशः स्यात् ।। २४ ।।

**हिन्दी—** स्त्रीकारक ग्रह यदि केन्द्र (१-४-७-१०) या त्रिकोण (९-५) में रहे और सप्तमेश तथा द्वितीयेश स्व स्व राशि में रहें तो जातक का एक ही विवाह होता है । सप्तमेश या द्वितीयेश यदि शुक्र से युत होकर त्रिक (६-८-१२) स्थान रहें और वे जितने पापग्रह से युत-दृष्ट हों उतने ही स्त्रियों का नाश होता है ।। २४ ।।

गर्भाभावयोग—

**लग्नस्थे सप्तसप्तौ दिनमणितनये कामगेऽथार्कमन्दौ**
**द्यूने चन्द्रे नभ:स्थे न च यदि गुरुणाऽऽलोकिते नो प्रसूते ।**
**द्वेष्येशे मित्रमन्दौ द्विषि सितकिरणेऽस्ते बुधेनेक्षिते नो**
**सूते द्वेष्ये जलर्क्षे यदि कुजरविजौ गर्भिणी स्यान्न नारी ।। २५ ।।**

**अन्वय:–** सप्तसप्तौ लग्नस्थे दिनमणितनये कामगे अथार्कमन्दौ द्यूने चन्द्रे नभ:स्थे यदि गुरुणा आलोकिते च न नो प्रसूते । द्वेष्येशे जलर्क्षे यदि कुजरविजौ (तदा) नारी गर्भिणी न स्यात् ।। २४ ।।

अथ गर्भाभावयोगानाह । लग्नस्थ इति । सप्तसप्तौ सूर्ये लग्नस्थे शनौ सप्तमे एकोयोग: । अथ सूर्यशनि सप्तमे गुरुदृष्टिरहितश्चन्द्रो दशमे इति द्वितीयो योग: । अत्र नारी नो प्रसूते । द्वेष्येश: शत्रुभवनस्वामी तथा मित्रमन्दौ रविशनि च द्विषि षष्ठे बुधेन दृष्ट:, सितकरणश्चन्द्रौऽस्ते सप्तमे अयं तृतीयो योग: । अत्र नारी नो प्रसूते । कुजशनि षष्ठे चतुर्थे यदि तदा जातस्य नारी गर्भिणी न स्यादिति चतुर्थो योग: । इति सप्तम भाव: ।। २५ ।।

**हिन्दी–** सप्तमभाव में शनि और लग्न में सूर्य हो तो, अथवा सप्तमभाव में सूर्य व शनि हों तथा दशम भाव चन्द्र-बृहस्पति की दृष्टि से रहित हो तो, अथवा सूर्य षष्ठेश होकर शनि के साथ षष्ठभाव में ही रहे और चन्द्रमा बुध से दृष्ट होकर सप्तमभाव में रहे तो जातक की स्त्री को प्रसव नहीं होता है (बारम्बार गर्भस्त्राव हो जाता है) । यदि षष्ठ या चतुर्थभाव में भौम अथवा शनि रहे तो उसकी स्त्री गर्भवती नहीं होती है (गर्भ नहीं ठहरता है) ।। २५ ।।

अष्टमभावजन्ययोग—

**रन्ध्रस्थानस्थिता वा स्थिरभवनगताः शुक्रवागीशसौम्याः**
**कृच्छ्राणां कर्मणां ना भवति हि नियतं कारकः स्तब्धभावः ।**
**बाल्ये दुःखी नरःस्यान्निधनगृहपतौ लाभयाते सुखी स्यात्**
**पश्चात्पापेऽल्पमायुः शुभखगसहिते दीर्घमायुर्नराणाम् ।।२६ ।।**

**अन्वयः–** शुक्रवागीश सौम्याः रन्ध्रस्थानस्थिताः वा स्थिरभवन गताश्चेत्तदा हि ना नियतं कृच्छ्राणां कर्मणां कारकः स्तब्धभावः स्यात् । निधनगृहपतौ लाभयाते नरः बाल्ये दुःखी पश्चात् सुखी स्यात् ।
निधनपतौ पापेऽल्पमायुः शुभखगसहिते नराणां दीर्घमायुः स्यात् ।। २६ ।।

अथाष्टमभावः तत्र कष्टकर्मकरादियोगमाह । रन्ध्रेति । शुक्रगुरुबुधाः अष्टमस्थाः स्थिरराशिगता वा तदा जातः ना पुरुषः नियतं नियमेन कष्टकर्मणां कर्ता स्यात् । स्तब्धभावः कठिनचित्तश्च स्यात् । अष्टमभावेशे लाभगे बाल्ये बाल्यावस्थायां दुःखी पश्चात्सुखी स्यात् । लाभगेऽष्टमेशे पापे अल्पायुः स्यात् । तस्मिन्नेव शुभग्रहयुक्ते जातानां दीर्घमायुः स्यात् ।। २६ ।।

**हिन्दी–** जन्मकाल में यदि शुक्र-बृहस्पति और बुध अष्टमभाव में या स्थिरराशि (वृष-सिंह-वृश्चिक-कुम्भ) में रहें तो जातक निश्चित ही कठिन कार्यों को करने वाला और कठोर हृदयवाला होता है । अष्टमेश यदि एकादश भाव में रहे तो जातक बाल्यावस्था में दुखी और बाद में सुखी होता है । अष्टमेश पापग्रह हो और यदि वह एकादश भाव में रहे तो जातक अल्पायु होता है । यदि अष्टमेश शुभग्रह हो या शुभग्रह से युक्त होकर एकादश भाव में रहे तो दीर्घायु होता है ।। २६ ।।

अल्पायुयोग—

**कुर्यादायुर्गृहेशः खलखगयुगरिप्रान्त्यसंस्थोऽल्पमायु-**
**श्चेल्लग्नाधीशयुक्तो निधनभवनपः स्वल्पमायुः प्रदत्ते ।**
**रन्ध्रस्थो वा चिरायुस्तदनु रविभवस्तत्र तद्वल्लयेशः**
**कोशस्थानस्थितचेज्जनुषि हि मनुजो वैरियुक्तस्करः स्यात्।।२७।।**

**अन्वयः–** आयुर्गृहेशः खलखगयुक् अरिप्रान्त्यसंस्थः अल्पमायुः कुर्यात् । निधनभवनपः (षष्ठे द्विदशे) लग्नाधीशयुक्तश्चेत्स्वल्पमायुः प्रदत्ते । रन्ध्रस्थः (निधनेशः) चिरायुर्वा स्यात् । तदनु तत्र रवि भवस्तद्वत् (दीर्घायुः) लयेशः कोशस्थानस्थितश्चेत्तदा जनुषि हि मनुजो वैरियुक् तस्करः स्यात्।।२७।।

कुर्यादिति । आयुर्गृहेशः अष्टमपतिः क्रूरयुक्तः षष्ठद्वादशगतः तदाल्पमायुः कुर्यात् । अष्टमपतिः लग्नेशयुक्तः अरिप्रान्त्यसंस्थः इत्यनुषगंः तदा स्वल्पमायुः प्रदत्ते अष्टमेशः रन्ध्रस्थो वा चिरायुः प्रदत्ते । अष्टमेशः तदनु रविभवो वा तत्राष्टमे तद्वत् चिरायुः प्रदत्ते । लयेशः अष्टमेशः कोशस्थानस्थितः द्वितीये स्थितश्चेत्तदा तस्करो वैरियुक्तश्च स्यात् ।। २७ ।।

**हिन्दी–** अष्टमेश यदि पापग्रह से युत होकर षष्ठ या द्वादश भाव में रहे तो जातक अल्पायु होता है । यदि अष्टमेश अष्टम भाव में ही रहे तो दीर्घायु होता है । अष्टमेश यदि लग्नेश से युत होकर षष्ठ या द्वादश भाव में रहे तो अल्पायु होता है । यदि शनि अष्टम भाव में रहे तो दीर्घायु होता है । अष्टमेश यदि द्वितीय भाव में रहें तो जातक शत्रुओं से युक्त और चौर प्रवृत्ति का होता है ।। २७ ।।

संग्राम में मृत्युयोग—

**आयुर्देहाधिनाथौ निधनरिपुगतौ हीनवीर्यौ प्रसुतौ**
**संग्रामे कीर्तिशेषं व्रजति बलयुतौ तौ तदा तज्जयाप्तिम् ।**
**शुक्रेणान्दोलिकायास्तनुपविधियुतो वाहनस्थाननाथो**
**मूर्तौ दन्ताबलेन्द्रैरथ गुरुसहितः स्याज्जयो वाजिवाहैः ।। २८ ।।**

**अन्वयः–** प्रसूतौ हीनवीर्यौ आयुर्देहाधिनाथौ निधनरिपुगतौ (चेत्तदा) संग्रामे कीर्तिशेषं (व्रजति) । तौ बलयुतौ तदा जयाप्तिं व्रजति । वाहनस्थाननाथः

शुक्रेण युक्तः (स्यात्तदा) आन्दोलिकायाः जयः भवति । तनुपविधु युतः मूर्तौ (स्यात्तदा) दन्तावलेन्द्रैः जयः स्यात् । अत्र सुखेशः गुरु सहितः मूर्तौ चेत्तदा वाजिवाहैः जयः ।। २८ ।।

आयुरिति । प्रसूतौ जन्मसमये आयुर्देहादिनाथौ अष्टमलग्नपती हीनवीर्यौ अष्टमषष्ठगतौ तदा सङ्ग्रामे कीर्तिशेषं प्राप्नोति सङ्ग्रामाभिमुखो युद्धं विहाय पञ्चत्वं प्राप्नोति इत्यर्थः । तावेवायुर्देहाधिनाथौ सबलौ चेद्विजयी भवति । चतुर्थेशः शुक्रेण युतश्चेत् आन्दोलिकायाः शिविकाया जयः शिविकारूढो जयतीत्यर्थः । चतुर्थेशो लग्नेशेन चन्द्रेण च युतः मूर्तौ लग्ने स्थितश्चेत्तदा दन्तावलेन्द्रैः महागजैः जयः स्यात् । अथ चतुर्थेशो गुरुयुतः लग्ने चेत्तदा वाजि वाहैः वाजिराजैः गजेन्द्रैश्च सह जयः स्यात् । इत्यष्टमभावः ।। २८ ।।

**हिन्दी–** यदि जन्मसमय में अष्टमेश और लग्नेश बलहीन होकर अष्टम एवं षष्ठभाव में रहें तो जातक सङ्ग्राम में कीर्तिशेष हो (मर) जाता है यदि लग्नेश और अष्टमेश बलवान हों तो वह सङ्ग्राम में विजयी होता है । चतुर्थेश शुक्र से युत हों तो आन्दोलिका (सवारी) पर बैठकर चतुर्थेश तथा लग्नेश चन्द्रमा से युत होकर लग्न में स्थित हों तो हाथी पर बैठकर चतुर्थेश तथा लग्नेश चन्द्रमा से युत होकर लग्न में स्थित हों तो हाथी पर बैठकर, चतुर्थेश यदि बृहस्पति के साथ लग्न में रहे तो घोड़ा-हाथी पर बैठकर विजय प्राप्त करता है।।२८।।

नवमभावफल––

**भाग्येशो मूर्तिवर्ती सुरपतिगुरुणाऽऽलोकितोभूपवन्द्यो**
**लग्नस्थो वाहनेशो नवमपतिरुभौपश्यतशचेत्स्वगेहम् ।**
**सर्वासामास्पदं स्यान्मनुज इह तदा सम्पदां वाहनेन्द्रो**
**रन्ध्रस्थानस्थितश्च व्रजति हि मनुजो भाग्यराहित्यमेवम् ।। २९ ।।**

**अन्वयः–** सुरपतिगुरुणा आलोकितः भाग्येशः मूर्तिवर्ती चेत्तदा मनुजः भूपवन्द्यः वाहनेशः नवमपतिः लग्नस्थः उभौ स्वगेहं पश्यतश्चेत्तदा मनुजः इह सर्वासां सम्पदामास्पदं स्यात् । तथा वाहनेन्द्रः रन्ध्रस्थानस्थितश्चेत् तदा हि मनुजः भाग्यराहित्यं व्रजति ।। २९ ।।

अथ नवमभावस्तत्र शुभायोगमाह । भाग्येश इति । नवमभावेशो गुरुदृष्टः लग्नस्थश्चेत् तत्र जातो राजवन्द्यः राजमान्यः स्यात् । भाग्येशः लग्नस्थः वाहनेशश्चतुर्थाधिपो नवमपतिश्च तावुभौ चतुर्थनवमपती स्वभवनं चतुर्थपरिश्चतुर्थं नवमपतिर्नवमं पूर्णदृष्ट्यापश्यतश्चेत्तदा सर्वासां धनधान्यसुवर्णादिसम्पदां आस्पदं आश्रयः मनुजः स्यात् । वाहनेशः अष्टम स्थस्तथा मनुजः भाग्यराहित्यं व्रजति । होराविद्भिरेवं प्रकारेण भाग्यराहित्ये नुःहीनानां शुभलक्षणं वयोबलादिरहितानां वाहनानां प्राप्तिस्तदनुः चपलता स्थिरता च ज्ञेयेत्यग्रिमेण सम्बन्धः ।। २९ ।।

**हिन्दी–** जन्म समय में गुरु से दृष्ट होकर नवमेश यदि लग्न में रहे तो जातक **राजपूजित** होता है । यदि नवमेश लग्न में हों तथा चतुर्थेश नवमेश अपनी अपनी राशि को देखते हों तो जातक सर्वसम्पतियुक्त होता है । यदि चतुर्थेश अष्टम भावगत हो तो जातक भाग्यहीन होता है । और उसे हीन वाहनों की प्राप्ति तथा अस्थिरता होती है ।। २९ ।।

नवमभावजन्य फल—

**हीनानां वाहनानां तदुन चपलताप्राप्तिरेवं नराणां**
**ज्ञेया होरागमज्ञैरथ नवमपतौ लाभगे राजवन्द्यः ।**
**दीर्घायुर्धर्मशीलस्तदनु धनवपुर्वाहनेशः स्वगेहे**
**धर्मेशो लग्नवर्ती जनुषि यदि गजस्वामिसिंहासनानाम् ।। ३० ।।**

**अन्वयः–** नवमपते लाभगे (तदा) हीनानां वाहनानां प्राप्तिः तदनु चपलता राजवन्द्यः दीर्घायुः धर्मशीलः । तदनु जनुषि यदि धनवपुर्वाहनेशाः स्वगेहे, धर्मेशो लग्नवर्ती (सयात्तदा) गजस्वामि सिंहासनानां प्राप्तिः ।। ३० ।।

हीनानामिति । अथ नवमेशे लाभगे राजमान्यः दीर्घायुर्धर्मशीलश्च स्यात्। तदनु जनुषि धनवपुर्वाहनेशाः द्वितीय लग्नचतुर्थपतयः स्वगेहे लग्नेशो लग्ने धनेशो धने वाहनेशो वाहनभवने इत्यर्थः । धर्मेशो लग्नगतो यदि तदा गजस्वामिसिंहासनानां प्राप्तिरित्यनुषगंः । तत्र गजाः हस्तिनः स्वामिसिंहासनानां राजाधिष्ठेयसिंहासनं राज्यकार्येषुभद्रासनं तेषां प्राप्तिः स्यात् ।। ३० ।।

**हिन्दी–** यदि नवमेश एकादश भाव में रहे तो जातक राजपूजित-दीर्घायु और धर्मशील होता है । यदि लग्नेश-द्वितीयेश और चतुर्थेश स्व स्व राशि में रहें तथा नवमेश लग्न में रहे तो जातक हाथी-सिंहासनादि का स्वामी होता है ।। ३० ।।

नवमेशानुसार योग—

**योगानां स्यादमीषां प्रचुरबलयुतो योऽधिपस्तद्दशायां**
**लब्धिश्चान्तर्दशायामथ गुरुभृगुजौ वाहनाधीशयुक्तौ ।**
**केन्द्रेऽयाने त्रिकोणे त्वथ गुरुकवियुग्वाहनस्थानगो वा**
**भाग्याधीशः स्वराशौ भवति नरपतिर्वाहन व्यूहनाथः ।। ३१ ।।**

**अन्वयः–** अमीषां योगानामधिपः प्रचुरबलयुतः स्यात् तद्दशायां अन्तर्दशायां च लब्धिर्भवति । अथ वाहनाधीशयुक्तौ गुरुभृगुजौ केन्द्रे अयाने त्रिकोणे भवेतां, अथ गुरु कवियुक् भाग्याधीशः वाहनस्थानगः वा स्वराशौ (स्यात्तदा) वाहनव्यूहनाथः नरपति भवति ।। ३१ ।।

योगानामिति । अमीषामुक्तवक्ष्यमाणानां योगानां योऽधिपः योग कर्त्ता यो ग्रह अधिकबलयुतस्तस्यदशायां अन्तर्दशायां लब्धिः योगफल लाभः स्यातः । अथ गुरुशुक्रौ वाहनेशयुतौ सन्तौ केन्द्रे अयाने आगमे एकादशे इत्यर्थः, त्रिकोणे स्यातामित्येको योगः । अथ गुरुशुक्रयुतो भाग्याधीशः भाग्ये चतुर्थे वा स्यात्तदायं द्वितीयो योगः । अत्र योगद्वये जातः वाहनव्यूहानां समुदायानां नाथः ईशो नरपतिः स्यात् ।। ३१ ।।

**हिन्दी–** पूर्व कथित योगों के स्वामी जो अधिक बलशाली हों उनकी दशा या अन्तर्दशा में फल की प्राप्ति होती है । चतुर्थेश के साथ बृहस्पति व शुक्र यदि केन्द्र (१-४-७-१०) में या त्रिकोण (९-५) में रहें तो, अथवा बृहस्पति व शुक्र से युत होकर नवमेश चतुर्थ भाव में या स्वराशि में रहे हो जातक वाहन समूह का स्वामी और राजा होता है ।। ३१ ।।

चिन्ता कारक योग—

**कर्मस्थे क्षेत्रचिन्ता त्रिकभवनगते सौख्यचिन्ता महीजे,**
**वागीशे यानभूषावसनहयभवा चामरच्छत्रचिन्ता ।**
**प्रालेयांशौ सिते स्यादथ मदनगते वाक्पतौ पुत्रचिन्ता,**
**संतानस्थानयाते हिमकरतनये बुद्धिजाथ त्रिकोणे ।। ३२ ।।**

**अन्वयः–** महीजे कर्मस्थे क्षेत्रचिन्ता, त्रिकभवनगते सौख्यचिन्ता, वागीशे (त्रिके) यान-भूषा-वसन-हय-भवा (चिन्ता) प्रालेयांशौ सिते वा (त्रिके) चामरच्छत्रचिन्ता स्यात् । अथ वाक्पतौ मदनगते पुत्रचिन्ता, अथ हिमकरतनये सन्तानस्थानयाते बुद्धिजा चिन्ता ।। ३२ ।।

अथ चिन्ता योगाः । कर्मस्थ इति । भौमे कर्मस्थे क्षेत्रचिन्ता कर्षणबीजवापक्षेत्रसंस्कारादि प्रकारकक्षेत्रचिन्ता इत्यर्थः । त्रिकभवनगते षष्ठाष्टमद्वादशे महीजे सौख्यचिन्ता सकलविषयप्रयुक्तसौख्यचिन्ता स्यादित्यर्थः । वागीशे त्रिकस्थे वाहनभूषणवस्त्राश्वभवा चिन्ता स्यात् । चन्द्रे सिते वा त्रिकस्थे चामरच्छत्रचिन्ता तत्प्राप्तौ रक्षणे च चिन्ता स्यात् । अथ वाक्पतौ गुरौ सप्तमस्थे पुत्रचिन्ता पुत्रविषयकगोरक्षणादि चिन्तेत्यर्थः । बुधे पञ्चमे बुद्धिजा चिन्ता।।३२।।

**हिन्दी–** यदि भौम दशम भाव में रहे तो क्षेत्र सम्बन्धि चिन्ता भौम त्रिक (६-८-१२) स्थान में रहे तो सुख साधन की, बृहस्पति त्रिक स्थान में रहे तो सवारी-आभूषण-वस्त्र सम्बन्धि, चन्द्रमा या शुक्र त्रिक स्थान में हो तो छत्र-चामर सम्बन्धि, बृहस्पति सप्तम भाव में रहे तो पुत्र सम्बन्धि, बुध पञ्चम भाव में रहे तो बुद्धि-विद्या सम्बन्धि चिन्ता ।। ३२ ।।

दशमभावफल—

**मार्तण्डे तातबन्धोरथ सुतनवमद्यूनगे दानवेज्ये**
**यात्राचिन्ता नराणामथ नवमसुते पुत्रजा वासवेज्ये ।**
**कर्माधीशो विवीर्यो यदि जनुषि तदा सर्वकर्मास्पदं नो**
**गेहे स्वीये यदाऽसौ शुभविहगयुतो मानवो मानशीलः ।। ३३ ।।**

**अन्वयः–** अथमार्त्तण्डे त्रिकोणे (तदा) तातबन्ध्वोः चिन्ता, दानवेज्ये सुतनवद्यूनगे नराणां यात्राचिन्ता, अथ वासवेज्ये नवमसुते पुत्रजा (चिन्ता) । यदि कर्माधीशः जनुषि विवीर्यः तदा सर्वकर्मास्पदं नो, यदाऽसौ (कर्मेशः) शुभविहगयुतो स्वीयगेहे तदा मानवः मानशीलः (भवेत्) ।। ३ ३ ।।

सूर्ये त्रिकोणस्थे पितुर्बान्धवस्य च चिन्ता । शुक्रे सुतनवम सप्तमगे यात्राचिन्ता । अथगुरौ नवमपञ्चमे पुत्रजा पुत्रभवाचिन्ता स्यात् । चिन्तानाम येषां जनानां । क्षेत्रादिसम्भवस्तेषां तद्विषयलाभालाभशुभानुकूल्यप्रातिकूल्यादि-संस्मृतिः। इति नवमभावः ।

अथ दशमफलमर्धेनाह । कर्माधीश इति । जनुषि कर्मभावेशो विवीर्यो निर्बलश्चेत्तदा जातः सर्वकर्मणामास्पदं स्थानं नो सर्वकर्मसाधको न स्यात् । अर्थात् जनुषिकर्माधीशो बली चेत्सर्वाणि कर्माणि साधयेज्जात इत्यर्थः । यदा शुभग्रहयुतो दशमाधीशः स्वीयेगेहे दशमे चेत्तदाजातो मानवो मानशीलो मानी भवेत्।। ३ ३ ।।

**हिन्दी–** सूर्य त्रिकोण (९-५) स्थान में रहे तो पिता व बान्धव की, शुक्र पञ्चम-नवम या सप्तम भाव में रहे तो यात्रा सम्बन्धि, बृहस्पति नवम या पञ्चम भाव गत हो तो पुत्र सम्बन्धि चिन्ता रहती है । कर्मेश यदि बलहीन हो तो जातक सभी कार्यो में अक्षम होता है । कर्मेश यदि शुभग्रह से युत होकर स्वराशि में रहे तो वह स्वाभिमानी होता है ।। ३ ३ ।।

आयुयोग—

**लाभेकेन्द्रे त्रिकोणे तनुनिधननभस्थानपाः संस्थिताश्चेद्**
**दीर्घायुः पापखेटाः पणफरहिबुकत्रिस्थिता मध्यमायुः ।**
**हीनायुः प्रोक्तमेते यदि जनुषि नृणां स्युस्तदाऽऽपोक्लिमस्था**
**रन्ध्रस्थानस्थितानां तनुपतिगगनस्वामिसूर्यात्मजानाम् ।।३४ ।।**

**अन्वयः–** यदि नृणां जनुषि तनुनिधन नभः स्थानपाः लाभे केन्द्रे त्रिकोणे संस्थिताश्चेत्तदा दीर्घायुः । पापखेटाः पणफर हिबुक त्रिस्थिताः (चेत्) मध्य-मायुः । एते आपोक्लिमस्थाः तदा हीनायुः प्रोक्तम् । रन्ध्रस्थानस्थितानां तनुपतिगगन स्वामि सूर्यात्मजानां यः हीनः तद्दशायुः (अग्रिम -श्लोके)।।३४।।

अथदीर्घमध्यायुर्योगानाह । लाभे इति । यदा नृणां जन्मसमये लग्नाष्टम दशमेशाः लाभे केन्द्रे त्रिकोणे च स्थिताश्चेद्दीर्घायुः स्यात् । पापग्रहाः पणफर चतुर्थ तृतीयस्थिताः मध्यमायुः स्यात् । एते पूर्वोक्ता आपोक्लिमस्थाश्चेत्तदाल्पायुः स्यात् । द्वात्रिंशद्वर्षादर्वाक् हीनायुः ततो मध्यायुः । चतुः षष्ट्यानन्तरं दिर्घायुर्ज्ञेयम् । लग्नेशदशमेशशनीनां अष्टमस्थानस्थितानां मध्ये यो हीनः हीनबलस्तस्य दशापर्यन्तमायुः स्यादित्युत्तरेण सम्बन्धः ।। ३४ ।।

**हिन्दी–** जन्म समय में लग्नेश-अष्टमेश व दशमेश एकादश भाव में या केन्द्र (१-४-७-१०) में या त्रिकोण (६-९) में रहें तो दीर्घायु[१] योग होता है । पापग्रह यदि पणफर (२-५-८-११) में या चतुर्थ भाव में या तृतीय भाव में रहें तो मध्यमायु योग होता है । पापग्रह यदि आपोक्लिम (३-६-९-१२) में या चतुर्थ या तृतीय भाव में रहें तो हीनायु योग होता है । लग्नेश-दशमेश व शनि यदि अष्टम भाव में रहें ओर इनमें जो अल्पबली हो उसी की दशा पर्यन्त आयु होती है ।। ३४ ।।

१. (रसाङ्कैः गजाभ्रेन्दुभिः शून्यमासैस्त्रिधा दीर्घमायुः कलौ संप्रदिष्टम् । चतुःषष्टि वाह्वद्रयशीति प्रमाणैर्मतं मध्यमायुर्नृणां वत्सरैः स्यात् ।। तथा द्वित्रि षड्वह्नि शून्याब्धि वर्षैर्भवेदल्पमायुर्नराणां ...।।

दीर्घायु ९६।१०८।१२०, मध्यायु ६४।७२।८०, अल्पायु ३२।३६।४० ये पूर्ण में अल्पायु, मध्यायु, पूर्णायु । मध्य में अल्पायु, मध्यायु, पूर्णायु, और हीन में अल्पायु, मध्यायु और पूर्णायु के वर्ष प्रमाण हैं ।)

त्रिकोणस्थान से उत्पन्न योग–

**यो हीनायुस्तद्दशास्त्वथ निजभवनेधर्मकर्मात्मजेशा-**
**श्चेत्स्युस्तेषां दशायां बहुलबलवशाद्धर्म बुद्धिर्नराणाम् ।**
**हानिः स्यादन्यथाऽरौ तनुनिधनपति भानुपुत्रेण युक्तौ**
**स्यातां स्वर्भानुना चेत्तदनु च शिखिना तद्दशायां व्रणाः स्युः।।३५।।**

**अन्वयः–** अथ धर्म कर्मात्मजेशाः निजभवने स्युश्चेत्तदा तेषां दशायां नृणां बहु बलवशात् धर्मबुद्धिः अन्यथा हानिः स्यात् । तनुनिधनपती भानुपुत्रेण स्वर्भानुना शिखिना च युक्तौ अरौ (स्यात्तदा) तद्दशायां नराणां व्रणाः स्युः।।३५।।

य इति । अथ धर्मकर्मात्मजेशाः नवदशमपञ्चमेशाः स्वभवने नवमादिके स्युस्तदा तेषां योऽधिकबलस्तस्य दशायां जातस्य धर्मबुद्धिः स्यात् । अन्यथा परभवने यदा तेषां योऽधिकबलस्तद्दशायां धर्महानिः स्यादित्यर्थः लग्नाष्टमपती यदि शनिराहुकेतूनामन्यतमेन युतो षष्ठस्थौ तद्दशायां तनुनिधनपत्योरधिक बलस्य दशायां व्रणाः स्युः ।। ३५ ।।

हिन्दी– नवमेश-दशमेश व पञ्चमेश यदि स्व स्व राशि में रहें तो इनमें जो सर्वाधिक बली हो उसी की दशा में धार्मिक बुद्धि होती है । इससे विपरीत स्थिति हो अर्थात् ये सब ग्रह अन्यराशि में रहें और बलहीन रहें तो विपरीत फल समझना चाहिए । लग्नेश व अष्टमेश यदि शनि-राहु या केतु इनमें से किसी से युत होकर षष्ठभाव में रहें तो इनमें जो अधिक बलवान रहे उसी की दशा में जातक को व्रणादि से कष्ट होता है ।। ३५ ।।

मृत्यु योग–

**यानेशस्तत्र संस्थो यदि भवति तदा यानहेतुर्मृतिः स्याच्**
**चोराच्छस्त्रेण चिन्ता नवमभवनतो भाग्यजाता विधेया ।**
**व्योम्नो भूपालभूषावसनहयमहत्कर्मणां प्राप्ति चिन्ता**
**लाभस्थानेऽखिलानां व्यनिधनगृहात्कल्मषाणां विधेया ।। ३६ ।।**

**अन्वयः–** यदि यानेशः तत्र (षष्ठे) संस्थो भवति तदा यानहेतुः चौरात् शस्त्रेण मृतिः स्यात् । नवमभवनतः भाग्यजाता चिन्ताविधेया व्योम्नोभूपाल भूषा वसन हय महत्कर्मणां प्राप्ति चिन्ता विधेया । लाभ-स्थानेऽखिलानां प्राप्तिचिन्ता व्ययनिधन गृहात्कल्मषाणां चिन्ता ।। ३६ ।।

यानेश इति । चतुर्थेशस्तत्र षष्ठभावे चेत्तदा यानहेतुर्मृतिः स्यात् । चौराच्छस्त्रेण च मृतिः । तत्रेति अरिभावपरामर्शेन यानेशस्य शन्यादियोगे वक्ष्यते। अयमर्थः शनियोगे यानहेतोर्मृतिः, राहुयोगे चौरान् मृतिः, केतुयोगे शस्त्रेण मृतिः । अथ संक्षेपादुक्तानां नवमादिभावानां सामान्यचिन्तालम्बनमुच्यते। नवमभावतो भाग्यजाता चिन्ता विधेयाः । अयं भावः- भाग्ये यो ग्रहः भाग्येशो यो ग्रहः भाग्यभवनस्थो यो राशिस्तद्द्वारा केन्द्रग्रहात् भाग्यभवने शुभाशुभवर्गविवेकः । भाग्यभाग्येशबलाबलत्वमित्यादि विचार्य

जातकशास्त्रविचारं परिभूय बुद्ध्या फलं वक्तव्यम् । तथाभिहितं कल्याणवर्मणाभाग्यर्क्षपतिः कस्मिन्को वा भाग्यर्क्षमाश्रितो विहगः । बलवान्मध्यबलो या इत्यादि । तथान्यत्र—

भाग्ये बलिष्ठे यदि मेषराशौ चतुष्पदोत्थं प्रकारोति धर्मम् ।
वृषे बलिष्ठे बहुधेनुदायी युग्मे तथा ब्राह्मणभोज्यदाता ।।
स्यात् कर्कटे तीर्थपरश्च सिंहे जातो मनुष्यः परमधर्मनिष्ठः ।
यदृष्टिधर्मा मनुजो युवत्यां प्रसिद्धधर्मा तुलजो मनुष्यः ।।
प्रसिद्धधर्मे निरतोऽष्टमे भवश्चापे तु शास्त्रे तु विहगः स्वधर्मा ।
मृगे विरज्येत सुधर्मतो ना कुम्भे तु पापादिभवो हि धर्मः ।
मीने बलिष्ठे शुभभावजातो तडागवापीभवधर्मनिष्ठः ।।
भाग्येशे लग्नगे भूपकर्मकारी धने धनी ।
बन्धुप्रियो भ्रातृभावे चतुर्थे पितृभक्तिमान ।।
कृती तु पञ्चमे षष्ठे जातो विकलकारकः ।
सप्तमे सुभगस्त्रीमान् षण्ढः पापाष्टमे स्थिते ।।
स्वभेदाता देवभक्तो दशमे नृपकार्यकृत् ।
लाभे दीर्घायुरखिलो व्यये देशान्तरस्थितः ।
स्वस्वामिदृष्टियुक्तश्चेद् स्वदेशं फलदायकः ।।

**मुनिभिरुक्तं-** होरागमश्च बलवान्येषां ते श्रेष्ठ मानवाः ।।

**होरासारे-** भाग्ये खलाः स्वगृहगाः शुभदृष्टियुता यदि ।
सौभाग्य सौख्य युक्तश्च जन्म विद्याच्च भूपतेः ।।
क्रूरा नीचारिभांशस्था भाग्येशेन च वीक्षिताः ।
सर्वदा भाग्यहीनस्य जन्मविद्यात्र संशयः ।।
लग्नपे भान्तरे राशौ महाभाग्यो हि भाग्यतः ।
एकेन मध्यभाग्यः स्याद्भावे हीनभाग्यवान् ।।

**गर्गजातके-** हन्ति पुण्यं च कर्म पुण्यगतो नृणाम् ।
तुङ्गे स्वर्क्षे सहस्रांशुः पुष्कलं धर्ममादिशेत् ।।
भाग्यभाग्यं भवेद्धन्यः पितृपक्षपरायणः ।

धर्मे पूर्णो निशानाथः क्षीणः सर्वविनाशकृत् ।।
कुजे रक्तपदानन्दी भवेत्पशुपतिव्रती ।
भाग्यहीनश्च सततं नरः पुण्यगृहं गते ।।
मन्दभाग्यो बुधेपापे शुभे सौम्ये तु धार्मिकः ।
महाभाग्यः शुभे जीवे तथा शुक्रे बलीयसि ।।
दण्डप्रदो वक्रगतो नवमस्थे शनैश्चरे ।
स्वर्क्षोच्चगे शनौ भाग्ये राजा भवति धार्मिकः ।।
राहौ धर्मगते जातः सत्यशौचविवर्जितः ।।

**अन्यत्र–** भाग्याधिपश्चेद्यदि केन्द्रवर्ती आदौ वयस्येव सुखी मनुष्यः ।
त्रिकोणगः स्वोच्चगतोऽथवास्यान्मध्ये वयस्यल्पफलप्रदः स्यात् ।।
भाग्यस्यनाथे स्वगृहेऽथ मित्रगृहेऽथवा स्यात्स्वनवत्रिभागे ।
भाग्योदयं तस्य वदन्ति तज्ज्ञाः शुभग्रहेन्द्रैश्च युतेक्षिते च ।।
नीचस्थो वा शत्रुगेहस्थितो वा भाग्यस्वामी रिष्फरन्ध्रारिगो वा ।
पापैः खेटैः संयुतौ वाऽथदृष्टो भाग्यैर्हीनः स्याद्दरिद्री सदैव ।।
नवमभावपती रिपुरन्ध्रग्रो नवमभं रिपुदृष्टयुतं तथा ।
यदि तदा न च धर्मरतो नरः शुभखगैरथ धर्मरतो नरः ।।
अबलेऽपि शुभे खेटे भाग्यस्थे धार्मिकी नरः ।
शुभवर्ग युते भाग्ये शुभकर्मायथाऽन्यथा ।।
इत्यादि चिन्ता विधेया, तत्राह जातकसारावलीकारः -
होरेन्दोर्बलयोगाद्यो दशमस्तत्स्वभावजं कर्म ।
तस्याधुपतेश्च तथा वृद्धिर्ज्ञेया तथा हानिः ।।
दशमे नक्षत्रपतिर्लग्नात्पुरुषस्य यस्य सम्भवति ।
सर्वारम्भो भवति हि विनिर्दिशेत्तस्य जातस्य ।।

**जातकसारे–** स्वस्थे खगे खलयुते खलजे नवांशे
स्वोच्चर्क्षगे स्वभवने सुखवृत्तयः स्युः ।
नीचारिभावः गृहगेऽल्पसुखाल्पपुण्यो
दासोपचारःभृतकानुचराश्च दासीः ।।

धर्मभावे शुभक्षेत्रे शुभदृष्टे सुकर्मकृत् ।
पापेक्षिते पापकर्मा स्वामी दृष्टे तु मध्यमः ।।
वैद्याः पुरोहिताः शास्त्रस्मृतिज्ञा वञ्चका नराः ।
जायन्ते कर्मगैः पापैः सौम्यग्रहनिरीक्षतैः ।।

**वराहः-** अर्थाप्तिः पितृपितृपत्निशत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः ।
होरेन्द्वोर्दशमपतेर्विकल्पनीयाभेन्द्वर्कास्पदपतिगांशनाथवृत्या ।।
अर्कांशे तृणकनकोर्णमेषजाद्यैश्चन्द्रांशे कृषिजलजागनाश्रयाच्च ।
धात्वग्निप्रहरणसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ।।
जीवांशे द्विजविबुधाकरादिधर्मैः काव्यांशे मणिरजतादिगोमहिष्यैः ।
सौरांशे श्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः ।।
मित्रारिस्वगृहगतैस्ततस्ततोर्थान्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।
राज्याधीशे केन्द्रगे सौम्यदृष्टे पापे केन्द्रे सुप्रतापाभिधानः ।
जातो नित्यं भूमिपैः सेवनीयो भाग्यैर्युक्तं सुप्रतापप्रसिद्धः ।। इति ।
अथ लाभस्थाने अखिलानां वस्तूनां प्राप्तिचिन्ता विधेया ।

**तत्र होराप्रदीपे-**

स्वस्वामिसद्ग्रहयुतेक्षित आर्यवर्गैः सद्धर्मको भवति वस्तु विशेष लाभः ।
क्रूरे च दृष्टिसहिते च तत्रलाभस्तद्वर्गकेऽप्यथ च मिश्रफलं विधत्ते।।
लाभे रवीक्षितयुते रविवर्गयुक्ते चौराच्चतुष्पदयुताच्च भवेत्प्रतापः ।
तद्वद्विधौ युवतितोयजनादिजातो भौमे सुवर्णमणिपावकशस्त्रजातः ।।
सौम्येक्षितेज्ञगत आयगृहे धनस्याच्छिल्पादिकाव्यलिपिभिस्तुरगैः सकांस्यैः ।
जीवेक्षितायगुरुवर्गयुतायगेहे यज्ञादिहेमहयनागरथादि मुख्यैः ।।
शुक्रेक्षितायशनि वर्ग युते महिष्यः लोहादिकृष्यवनकार्यभवा विवृद्धिः ।
नीचारिभार्कगखगोक्तफलं न दद्याद्धीतिग्रहोद्भवबलेवलिस्तुवाच्यम् ।। इति ।
व्ययगृहान्निधनगृहाच्च मलिनकर्मणां चिन्ता विधेया ।

**गर्गजातके-** क्षीणेऽब्जे वा रवौरिष्फे धनं पुंसामथाहरेत् ।
बहुधार्थक्षयो भौमे ज्ञदृष्टेऽन्येषु सिद्धयः ।।

नृपीडय च सन्तप्तं परिवादेन पीडितम् ।
नृशंसं पुरुषं चान्द्रिः कुरुते व्ययराशिगः ।।
उच्छ्रितव्ययकारी च व्ययगे देवतागुरौ ।
श्रद्धाहीनो घृणाहीनो व्ययगे भार्गवे नरः ।।
व्ययस्थानगते मन्दे क्रूरेषु कुरुते रुचिम् ।
व्यये राहौ नीचकर्मा कपटी कुलदूषकः ।।
व्यये भावे स्वामियुक्ते शुभदृष्टे च सत्यपि ।
कीर्तिमान् जायते मर्त्यो विपरीते विपर्ययः ।।
सुधीभिरिदं नियतं नियमेन ज्ञेयम् ।

इति लाभभावः ।। ३६ ।।

**हिन्दी-** जन्म समय में चतुर्थेश षष्ठभाव में हो और शनि से युक्त हो तो वाहन से, राहु युक्त हो तो चौर से, केतु युक्त हो तो शस्त्र से मृत्यु होती है । नवम भाव से भाग्य सम्बन्धि, दशम भाव से राजा आभूषण-वस्त्र-अश्व और उत्तमोत्तम कार्य सम्बन्धि, एकादशभाव से पापकर्म सम्बन्धि विचार करना चाहिए।। ३६ ।।

व्ययभाव फल—

**लग्नस्थे रि:फनाथे भवति सुवचनो रुपवान्वा**
**स्वर्क्षे कार्पण्य बुद्धिर्बहुतरपशुमान् ग्रामयुक्तः सदास्यात् ।**
**धर्मे तीर्थावलोकी बहुलवृषमतिः क्रूरयुक्ते च पापी**
**मिथ्याकोशान्तकृतस्यान्नियतमिदमिति ज्ञेयमेवं सुधीभिः ।। ३७ ।।**

**अन्वयः–** रिष्फनाथे लग्नस्थे मानवः सुवचनः वा रुपवान्भवति । स्वर्क्षे सदा कार्पण्यबुद्धिः बहुतर पशुमान् ग्रामयुक्तः स्यात् । धर्मे (द्वादशेशः) बहुल वृषमतिः (भवेत्) क्रूरयुक्ते च पापी मिथ्याकोशान्तकृत स्यात् इतीदं सुधिभिः एवं नियतं ज्ञेयम् ।। ३७ ।।

द्वादशभावधिपे लग्नस्थे सति मानवः सुवचनः सुवाङ्माधुर्यो रूपवान्भवति । तथास्वर्क्षे स्वगृहे सति कृपण बुद्धिः अनेकपशुयुक्तो ग्रामयुक्तश्च ग्रामाधिकारयुक्तश्च स्यात् । तथा धर्मे नवमे सति तीर्थावलोकी तीर्थयात्रावान्

बहुलवृषमतिः । अत्यन्तधर्मबुद्धिश्च स्यात् । तथा पापग्रहयुक्ते सति पापी मिथ्याकोशान्त कृत वृथा सञ्चितद्रव्यनाश कृत्स्यात् । अस्माद्योगान्नियतं फलं ज्ञेयम्।। ३७ ।।

**हिन्दी–** द्वादशेश यदि लग्न में रहे तो जातक सुन्दर वचन बोलने वाला व स्वरूपवान, द्वादशेश यदि स्वराशि का रहे तो कृपण बुद्धि वाला तथा बहुत ग्रामों व पशुओं का स्वामी, द्वादशेश यदि नवम भाव में रहे तो तीर्थयात्रा की प्रवृत्ति वाला और धार्मिक, द्वादशेश यदि पापग्रह से युक्त हों तो पापकर्मी और अपव्ययी होता है । बुद्धिमानों को ये सब योग इसी प्रकार जानना विचारना चाहिए ।। ३७ ।।

अध्याय उपसंहार—

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेस्मिन् ।**
**भावाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तः शैलरामैः प्रणीतः ।। २ ।।**

।। इति जातकालङ्कारे द्वितीयोऽध्यायः ।।

**अन्वयः–** हृद्यैः पद्यैः गुम्फिते सूरितोषेऽस्मिन् मञ्जुले अलंकाराख्ये जातके ग्रन्थे श्रीगणेशेन वर्यैः शैलरामैः वृतैः युक्तः भावाध्यायः प्रणीतः ।। २ ।।

अध्यायं समापयति शालिनीवृत्तेनाह । श्रीगणेशेन भावाध्यायः शैलरामैर्वृत्तैः सप्तत्रिंशद्भिः श्लोकैरुक्तः ।। २ ।।

।। इति श्रीहरभानुविरचितायां जातकालङ्कार टीकायां भावफलाध्यायो द्वितीयः ।।

**हिन्दी–** हृदय को प्रसन्न करने योग्य सुन्दर छन्दों से गुम्फित (सुसज्जित) विद्वानों के प्रसन्नार्थ इस मनोहर जातकालङ्कार ग्रन्थ में श्रीगणेश कवि ने ३७ श्लोकों में इस भावाध्याय (द्वितीय अध्याय) की रचना की।।२।। सत्येन्द्रमिश्र कृत 'प्रज्ञावर्द्धिनी' हिन्दी टीका में जातकालङ्कार का भावाध्याय द्वितीय समाप्त ।। २ ।।

**योगाध्याय:-३**

अध्याय प्रयोजन—

**ग्रहाधीना योगा: सदसदभिधाना जनिमतां**
**ततो योगाधीनं फलमिति पुराणै: समुदितम् ।**
**अतो वक्ष्ये योगान् सकलगणकानन्दजनकान्**
**शुकास्यादुद्भूतं मतमिह विलोक्येह रुचिरम् ।। १ ।।**

**अन्वय: –** जनिमतां सदसदभिधाना योगा: ग्रहाधीना: तत: फलं योगाधीनमिति पुराणै: समुदितम् । अत: इह शुकास्यादुद्‌भूतं रुचिरं मतं विलोक्य सकलगणकानन्दजनकान् योगान् वक्ष्ये ।। १ ।।

अथ योगाध्याय: । तत्र तावत् शुभाशुभयोगान् व्याकृत्य योगान्तरं वक्तुं प्रतिजानीते शिखरिणीवृत्तेन । ग्रहाधीना इति । पुराणैर्वसिष्ठशुकपराशरप्रभृतिभि: प्रोक्तं फलं योगाधीनम् अत: सकलगणकानन्दजनकान् अशेषज्योतिर्विदां प्रीत्युत्पादकान् योगान् वक्ष्ये । किं कृत्वा शुकास्यात् शुकमुनिमुखादुद्‌भूतं रुचिरं शोभनं मतं विलोक्य आलोच्य ।। १ ।।

प्रज्ञावर्द्धिनी

**हिन्दी–** जातक के शुभाशुभ योग ग्रहों के अधीन हैं और शुभाशुभफल योग के अधीन हैं ऐसा प्राचीन ऋषियों का मत है । अत: शुकदेव जी के मुखारविन्द से निकले हुए सुन्दर-मनोहर मतों का अवलोकन कर समस्त दैवज्ञों के लिए आनन्ददायक योगों को कहता हूँ ।। १ ।।

अनिष्टयोग—

**ऋक्षेश: क्षीणवीर्य: सुतनवमगतो मानवोमन्युमान्वै**
**राशीशे साङ्गनाथे रिपुनिधनगृहे प्रान्त्यगे दुर्बल: स्यात् ।**
**धर्मद्वेष्याष्टनाथा: खलखचरयुता: स्थानके क्वापि संस्था-**
**स्तैर्दृष्टा: स्यात्तदानीं परपुरुषरता सुन्दरी तस्य पुंस: ।। २ ।।**

**अन्वय: –** ऋक्षेश: क्षीणवीर्य: सुतनवमगतो वै मानव: मन्युमान् साङ्गनाथे राशीशे रिपुनिधनगृहे प्रान्त्यगे दुर्बल: स्यात् धर्म द्वेष्याष्टनाथा:

खलखचरयुतः ववापिस्थानके संस्थिताश्चेत् तैः दृष्टाः तदानीं तस्य पुंसः सुन्दरी परपुरुषरता स्यात् ।। २ ।।

अथारिष्ट योगानाह । ऋक्षेश इति । ऋक्षेशो जन्मराशिनाथः क्षीणबलः सन् त्रिकोणगतश्चेन्मानवो जातः मन्युमान् क्रोधी स्यात् । जन्मराशीशे सांगनाथे तनुपतिसहिते त्रिकस्थे दुर्बलः स्यात् । यस्य नवमषष्ठाष्टमेशा क्रूरग्रहदृष्टियुक्ताः यत्र कुत्रापि स्थिताः यदि तदानीं तस्य भार्या जारगामिनी स्यात् ।। २ ।।

**हिन्दी–** जन्म समय में जन्मराशीश बलहीन होकर पञ्चम या नवम (त्रिकोण) स्थान में रहे तो जातक क्रोधी और जन्मराशीश यदि लग्नेश के साथ त्रिक (६-८-१२) स्थान में रहे तो जातक दुर्बल (बलहीन) होता है । नवमेश-षष्ठेश और अष्टमेश यदि पापग्रह से युत या दृष्ट होकर किसी भी स्थान में रहें तो उसकी स्त्री परपुरुषरता (कुलटा) होती है ।। २ ।।

परजात योग—

**मातृस्थाने स्थितो चेत्कुजविधुसहितौ षष्ठरन्ध्राधिनाथौ**
**स्यातां यस्य प्रसूतौ भवति खलु नरस्त्वन्यजातस्तदानीम् ।**
**क्वापि स्थाने स्थितौ स्तः कलुषखगयुतौ भाग्यषष्ठाधिनाथौ**
**चेदेवं राहुणा वा तदनु च शिखिना संयुतावन्यजातः ।। ३ ।।**

**अन्वयः –** यस्य प्रसूतौ षष्ठ रन्ध्राधिनाथौ कुजविधुसहितौ मातृस्थाने स्थितौ स्यातां तदानीं तु नरः अन्यजातः भवति । भाग्यरन्ध्राधिनाथौ कलुषखगयुतौ ववापिस्थाने स्थितौ एवं चेत् राहुणा वा तदनु शिखिना संयुतौ तदानीम् अन्यजातः ।। ३ ।।

मातृस्थान इति । यस्य जन्मनि षष्ठाष्टमभवननाथौ कुजविधुयुतौ चतुर्थस्थौ स्यातां तदानी स नरः अन्यजातः जारजातः । तथा नवमषष्ठाधिनाथौ यत्र कुत्रापि स्थितौ क्रूरग्रहयुतौ अथवा केवलेन राहुणा शिखिना वा युतौ स्यातां तदान्यजातः । कलुषखगयुतावित्यनेन राहुकेतुरपि सर्वक्रूरयोगे विवक्षितः । अग्रिमश्लोके मन्दादीनां पार्थक्येन योगोपदेशात् कलुषखगयुतावित्यनेनैव सिद्धे राहुकेतुग्रहणं छन्दोऽनुरोधात् ।। ३ ।।

**हिन्दी–** जन्म समय में षष्ठेश व अष्टमेश भौम व चन्द्र से युक्त होकर यदि चतुर्थभाव में रहें तो अथवा नवमेश व षष्ठेश पापग्रह से युत होकर किसी भी स्थान में रहें तो अथवा नवमेश व षष्ठेश राहु या केतु से युत होकर किसी भी स्थान में रहें तो जातक परजात (दूसरे से जन्मा) होता है ।। ३ ।।

परस्त्री योग—

**युक्तौ मन्देन शूद्रादथ भवति विदा वैशयतो भास्करेण**
**क्षत्राज्जातः सितेन त्रिदशपगुरुणा भूमिदेवात्प्रसूतः ।**
**दैत्येशेज्यो सपापौ मदनरिपुधनस्थानगौ चेत्परस्त्रीगामी**
**व्यामारिपौ स्तौ गगनभवनगौ तत्पिताऽन्यारतः स्यात् ।। ४ ।।**

**अन्वयः –** मन्देन युक्तौ (भाग्यषष्ठाधिनाथौ तदा) शूद्रात् (जातः), अथ विदा वैश्यतो, भास्करेण क्षत्राज्जातः । सितेन त्रिदशपगुरुणा भूमिदेवात् प्रसूतः । दैत्येशेज्यौ सपापौ मदनरिपुधनस्थानगौ चेत्तदा परस्त्रीगामी, व्योमरिपौ गगन-भवनगौ चेत्तदा तत्पिता अन्यारतः स्यात् ।। ४ ।।

युक्ताविती । भाग्यषष्ठाधिनाथौ मन्देन युक्तौ शूद्राज्जातः उत्पन्नो भवति। अथ बुधयुक्तो वैश्याज्जातः भास्करेण युक्तो चेत्क्षत्रियाज्जातः । गुरुशुक्राभ्यां ब्राह्मणाज्जातः । बुध-गुरुशुक्राणां कलुषखगयुतत्वे क्रूरैर्दृष्टत्वे तद्योगेन नीचत्वेनास्तङ्गतत्वेन क्रूरवर्गस्थत्वेन वा सुधीभिर्बोध्यम् । अथ शुक्र-बृहस्पति सक्रूरौ सप्तमषष्ठधनस्थाने गतौ चेत्तदा परस्त्रीगामी स्यात् । दशमषष्ठाधिपौ दशमस्थौ तदा तत्पिता जातस्य पिता अन्यारतः स्यात्परस्त्रीगामी स्यात् ।। ४ ।।

हिन्दी– नवमेश और षष्ठेश यदि शनि से युत रहें तो शूद्र से, बुध से युत रहें तो वैश्य से, सूर्य से युत रहें तो क्षत्रिय से, गुरु व शुक्र से युत रहें तो ब्राह्मण से उत्पन्न समझना चाहिए । शुक्र और बृहस्पति पापग्रह से युत होकर यदि सप्तम-षष्ठ या द्वितीय भाव में रहें तो वह परस्त्रीरत होता है । दशमेश और षष्ठेश दोनों यदि दशमभाव में रहें तो जातक का पिता परस्त्रीरत होता है।।४।।

परस्त्रीगमन योग—

**मूर्तीशः पापयुक्तो धनसदनगतश्चेत्तदा सज्जनस्त्री**
**संयुक्तस्तत्पिता स्यात्खलविहगयुताः कामशत्रुस्वनाथाः ।**
**कोशस्थास्तद्वदेवं फलमिति विविधं भ्रातृपत्न्योश्च पित्रोः**
**स्थानेशाः क्वापि भावे तनुपतिसहिताश्चेत्पुमानन्यजातः ।। ५ ।।**

**अन्वयः –** मूर्तीशः पापयुक्तः धनसदनगतश्चेत्तदा तत्पिता सज्जन स्त्री संयुक्तः कामशत्रु स्वनाथाः खलविहगयुताः कोशस्थास्तद्वत् विविधं फलं ज्ञेयम्। एवं भ्रातृपत्न्योः पित्रोश्च स्थानेशाः तनुपतिसहिताः क्वापि भावे (स्थिता) श्चेत् पुमानन्यजातः ।। ५ ।।

मूर्तीश इति । क्रूरयुक्तो लग्नेशः द्वितीयस्थश्चेत्पिता सज्जनस्त्रीसंयुक्तः साधुजनस्त्रीगामी स्यात् । सप्तमषष्ठद्वितीयभावेशाः क्रूरयुताः द्वितीयस्थाश्चेत्तद्वदेव फलं विविधमित्येवं प्रकारैर्विविधफलमिति ज्ञेयम् । सज्जनर्स्त्रियामासक्तिर्दुराचारत्त्वं अभक्ष्यभक्षकत्वमित्यादि ज्ञेयमिति भावः । तृतीयसप्तमचतुर्थदशमेशास्तनुपतिसहिता यत्र कुत्रापि स्थिताश्चेज्जातः पुमान् जारजातः ।। ५ ।।

**हिन्दी–** पापग्रह से युत होकर लग्नेश यदि द्वितीय भाव में रहे तो अथवा सप्तमेश-षष्ठेश व द्वितीयेश यदि पापग्रह से युत होकर द्वितीय भाव में रहें तो जातक का पिता सच्चरित्र स्त्री में रत होता है । तृतीयेश-सप्तमेश-चतुर्थेश और दशमेश यदि लग्नेश से युत होकर किसी भी स्थान में रहें तो परजात योग होता है ।। ५ ।।

कुष्ठयोग—

**लग्नाधीशेन्दुपुत्रौ क्षितितनयनिशानायकौ ववापि संस्थौ**
**युक्तौ स्वर्भानुना वा भवति हि मनुजः केतुना श्वेतकुष्ठी ।**
**आदित्यो भौमयुक्तस्तदनु शनियुतो रक्तकृष्णाख्यकुष्ठी**
**सार्को लग्नाधिनाथो व्ययरिपुधनस्थानगस्तापगण्डः ।। ६ ।।**

**अन्वयः –** लग्नाधीशेन्दुपुत्रौ क्षितितनय निशानायकौ, स्वर्भानुना केतुना वा युक्तौ क्वापि संस्थौ हि मनुजः श्वेतकुष्ठी भवति, आदित्ये भौमयुक्तः

तदनु (सूर्यः) शनियुतः रक्त कृष्णाख्यकुष्ठी (स्यात्), सार्को लग्नाधिनाथो व्ययरिपु निधनस्थानगस्तापगण्डः ।। ६ ।।

लग्नाधीश इति । लग्नेशबुधौ कुजचन्द्रौ वा राहुकेतु अन्यतरयुतौ तदा जातः श्वेतवर्णोपलक्षित कुष्ठरोगी भवति । तदनु भौमशनियुतः आदित्यश्चेद्रक्तवर्णकृष्णवर्णनामकः कुष्ठवान् स्यात् । सूर्ययुतो लग्नेशः त्रिकस्थश्चेत्तदा जातस्य तापगण्डान्वितो गण्डो रोगविशेषः स्यात् ।। ६ ।।

**हिन्दी–** लग्नेश और बुध यदि राहु या केतु से युत होकर किसी भी स्थान में रहें तो अथवा भौम और चन्द्रमा यदि राहु या केतु से युत होकर कहीं भी रहें तो जातक सफेदकुष्ठ से युक्त होता है । सूर्य यदि भौम से युत होकर अथवा शनि से युत होकर कहीं भी रहे तो रक्तकुष्ठ से युक्त होता है । यदि लग्नेश सूर्य से युत होकर द्वादश-षष्ठ या अष्टम (त्रिक) भाव में रहे तो वह तापगण्ड रोग से युक्त होता है ।। ६ ।।

विविधरोग योग—

**ज्ञेयश्चन्द्रेण गण्डो जलज इह युतो ग्रन्थि शस्त्रव्रणः स्याद्**
**भूमिपुत्रेण पित्तं हिमकरतनयेनाथजीवेन रोगः ।**
**आमोद्भूतस्ततश्चेद्भृगुतनययुतो नुः क्षयाख्योगदः**
**स्याच्चौरोद्भूतोऽन्त्यजाद्वा यमशिखितमसामेकयुक् तन्वधीशः ।।७।।**

**अन्वयः -** चन्द्रेण युतः (लग्नपः) इह जलजो गण्डः ज्ञेयः । भूमीपुत्रेण युतः (लग्नपः त्रिके) ग्रन्थिशस्त्रव्रणः स्यात्, हिमकरतनयेन पित्तं, अथ जीवेन (युक्तः) आमोद भूत रोगः, ततश्चेत् भृगुतनययुतो (लग्नपः त्रिके) तदा नुः क्षयाख्यो गदः स्यात्, यमशिखितमसामेकयुक् तन्वधीशः चौरोद्भूतोऽन्त्य-जाद्वा ।। ७ ।।

ज्ञेय इति । चन्द्रेण युतो लग्नेशः त्रिकस्थश्चेज्जलजो गण्डः स्यात् भौमयुतो लग्नेशः त्रिकस्थश्चेत्तदा ग्रन्थिशस्त्रव्रणः स्यात् । ग्रन्थ्युपलक्षितः शस्त्रजो व्रणः स्यादित्यर्थः । बुधयुतो लग्नेशः त्रिकस्थश्चेत्पित्तरोगः स्यात् । जीवेन युतो लग्नेशः त्रिकस्थश्चेत्तदा आमोद्भूतः आमकोपजो रोगः स्यात् । शुक्रेण युतस्यत्र स्थितो लग्नेशस्तदानुर्मनुष्यस्य क्षयाख्यो रोगः स्यात् । यम

शिखितमसामेकयुक् शनिराहुकेतूनां मध्ये एकेन युक्तो लग्नेश: त्रिकस्थश्चेत्तदा चौरजोऽन्त्यजादुत्पन्नो वा रोग: स्यात् । रजक चर्मकारादयोऽन्त्यजा: ।। ७ ।।

हिन्दी– लग्नेश यदि चन्द्रमा से युत होकर त्रिक (६-८-१२) स्थान में रहे तो गलगण्ड रोगयुक्त लग्नेश यदि भौम से युत होकर त्रिक स्थान में रहे तो ग्रन्थि (गठियाँ-वातव्याधि) रोगयुक्त और शस्त्र से घाव, लग्नेश यदि बुध से युत रहे तो पित्तरोगयुक्त, लग्नेश यदि बृहस्पति से युत रहे तो आमवात रोगयुक्त लग्नेश यदि शुक्र से युत हो तो क्षयरोग युक्त तथा लग्नेश यदि शनि-राहु या केतु से युत रहे तो चौर से या नीचवर्ग से उत्पन्न रोग होता है ।। ७ ।।

रक्तश्वेत कुष्ठीयोग—

**चन्द्रो मेष वृषे वा कुजशनिसहित: श्वेतकुष्ठी सरोगो**
**दैत्येज्यारेन्दुमन्दास्तिमिभवनगता: कर्कटालिसिथता वा ।**
**अङ्गे सौख्येन हीन: परमकलुषकृद्रक्तकुष्ठी नर: स्याद्**
**वागीशो भार्गवो वा यदि रिपुगृहपो मूर्तिग: क्रूरखेटै: ।। ८ ।।**

**अन्वय:** – कुजशनिसहितश्चन्द्र: मेषे वृषे (चेत्तदा) श्वेत कुष्ठी सरोगो, दैत्येज्यारेन्दुमन्दास्तिमिभवनगता: वा कर्कटालिस्थिता (चेत्) नर: अङ्गे सौख्येन हीन: परम कलुषकृद्रक्तकुष्ठी स्यात्, यदि वागीश: भार्गवे वा रिपुगृहपो क्रूरखेटैर्दृष्ट: मूर्तिगश्चेत् ।। ८ ।।

चन्द्र इति । कुजशनियुतश्चन्द्रो मेषे वृषे वा यदि तदा नर: श्वेतकुष्ठी स्यात् । शुक्रभौमेन्दुशनयो: मीनराशिस्था यद्वा कर्कटवृश्चिकस्था: तदा नर: शरीर सौख्यरहित: महापातकी रक्तकुष्ठी स्यात् । गुरु: शुक्रो वा षष्ठभावाधिप: क्रूरैर्दृष्टो लग्नस्थश्चेत्तदा वक्त्रशोफीमुखाधिकरणकश्वयथुरोगयुक्त: स्यादित्यग्रिमश्लोकेन सम्बन्ध: ।। ८ ।।

हिन्दी– भौम व शनि से युत चन्द्रमा यदि मेष या वृष राशि में रहे तो श्रोतकुष्ठ रोग होता है । शुक्र-भौम-चन्द्र व शनि यदि मीन-कर्क या वृश्चिक राशि में रहें तो जातक शारीरिक सुख से वञ्चित, पापकर्मी और रक्तकुष्ठ रोग से युक्त होता है । बृहस्पति-शुक्र या षष्ठेश पापग्रह से दृष्ट होकर यदि लग्न में रहें तो मुँह में शोंफ (सूजन) रोग होता है ।। ८ ।।

व्रणरोग योग—

**दृष्टश्चेद्ववत्रशोफी त्वथ खलसहिता मीनकर्कालिभावाः**
**लूताकारश्चिरं स्यात्परमगदकरः कुष्ठ एवं नराणाम् ।**
**रिष्फस्थानस्थितश्चेद्विबुधपतिगुरुर्गुप्तरोगी नितान्तं**
**भूमीमार्तण्डपुत्रौ व्ययभवनगतौ शत्रुगौ वा व्रणी स्यात् ।। ९ ।।**

**अन्वयः** – ववत्रशोफी, अथ मीन कर्कालिभावाः खलसहिताः (स्यात्तदा) नराणां लूताकारः एवं परम गदकरः कुष्ठं चिरं स्यात् विबुधपति गुरुः रिःफस्थानस्थितश्चेत्तदा नितान्तं गुप्तरोगी, भूमीमार्तण्डपुत्रौ व्ययभवनगतौ वा शत्रुगौ (चेत्तदा) व्रणी स्यात् ।। ९ ।।

दृष्ट इति । अथ मीनकर्कवृश्चिकराश्युपलक्षिता भावाः क्रूरसहिता यदि तदा नराणां एवं प्रकारेण चिरं कुष्ठं स्यात् । तत्र प्रकारमाह । यत्र लूताकारकः सविशेषोः जन्तुविशेषः उत्कृष्टगदविशेषकरः लूताकारकृत्कुष्ठः स्यादित्यर्थः गुरुर्व्ययस्थश्चेन्नरः गुह्यरोगी यद्वा वैद्याज्ञानरोगी स्यात् । भौमशनी व्यये षष्ठे वा स्यातां तदा व्रणी व्रणयुतः स्यात् ।। ९ ।।

हिन्दी– मीन-कर्क और वृश्चिक राशि पापग्रह से युत होकर किसी भी भाव में रहें तो लूता (मकड़जाल) कुष्ठ रोग होता है । बृहस्पति यदि द्वादश भाव में रहे तो जातक असाध्य गुप्तरोग वाला होता है । भौम और शनि द्वादश या षष्ठ भाव में रहें तो व्रणादि (घाव-फुन्सी) रोग होता है ।। ९ ।।

पङ्गु-मूर्ख योग—

**मेषे-मीने कुलीरे तदनु च मकरे वृश्चिके मन्दचन्द्रौ**
**स्यातां क्रूरान्वितौ चेन्नवमभवनगौ स्याच्च खंजः ।**
**लग्नस्थं पश्यतीन्दुं दिनमणि तनयं भूमितो द्यूनदृष्ट्या**
**बुद्ध्या हीनो नरःस्यादिनविधुविवरे भूमिजश्चेत्तथैव ।। १० ।।**

**अन्वयः** – क्रूरान्वितौ मन्द चन्द्रौ मेषे मीने कुलीर स्यातां तदनु च मकरे वृश्चिके नवम भवनगौ चेत्तदा मानवः खञ्जः स्यात् भूमिजः द्यूनदृष्ट्र्या लग्नस्थं इन्दुं दिनमणितनयं पश्यति तदा नरः बुद्धया हीनः, भूमिजश्चेदिनविधुविवरे तथैव (भवेत्) ।। १० ।।

मेषे इति । क्रूरग्रहयुतौ चन्द्रशनी मेषमीनकर्कमकरवृश्चिकान्यतम-राशिगतौ नवमभवनगौ चेन्मानवो जातः खंजः खंजाख्यपादरोगी स्यात् । भूमिपुत्रः सप्तमदृष्ट्या लग्नस्थं चन्द्रं शनिं च पश्यति चेत्तदा नरः बुद्ध्याहीनः स्यात् । इन-विधु विवरे रविचन्द्रयोर्मध्ये भौमश्चेत्तथैव बुद्धिहीनः स्यात् । इन शब्दो लक्षणया दिनकरपरो ज्ञेयः ।। १० ।।

हिन्दी– पापग्रह से युत होकर शनि और चन्द्रमा यदि मेष-मीन-कर्क-मकर या वृश्चिक राशि के होकर नवमभाव में स्थित हों तो जातक खञ्ज (लङ्गड़ा) होता है । चन्द्रमा और शनि लग्न में हों तथा भौम सप्तम में हो तो अथवा सूर्य और चन्द्र के मध्य में भौम रहे तो जातक बुद्धिहीन (मूर्ख) होता है।।१०।।

बुद्धिमान-बुद्धिहीन योग—

**प्रालेयांशौ तनुस्थे गगनसदनगे साधिकारेऽर्कसूनौ**
**दृष्टेऽस्मिन्कामदृषट्या हिमकिरणभुवा बुद्धियुङ् मानवः स्यात् ।**
**पृथ्वीसूनुं मृगांकं तनुनिलयगतं पूर्णदृष्ट्येन्दु सूनुः**
**पश्येच्चेद्बुद्धिहीनस्त्वथ शशितनुपौ भूभुवा पीडितौ वा ।।११।।**

**अन्वयः –** प्रालेयांशौ तनुस्थे साधिकारे अर्कसूनौ गगनसदनगे अस्मिन् हिमकिरण भुवा कामदृष्ट्वा दृष्टे (चेत्तदा) मानवः बुद्धियुक् स्यात्, तनुविलयगतं पृथ्वीसूनुं मृगा इन्दुसूनुः पूर्णाङ्कदृष्ट्या चेत्पश्येत्तदा बुद्धहीनः, अथ शनितनुपौ भूभुवा पीडितौ वा बुद्धिहीनः ।। ११ ।।

प्रालेयांशाविति । चन्द्रे लग्ने साधिकारे गृहहोराद्रेष्काणादिवर्गाधिपत्य-सहिते शनौ दशमस्थे बुधेन पूर्णदृष्टेऽस्मिन्मानवो जातः बुद्धिमान स्यात् । लग्नस्थं भौमं चन्द्रं च पूर्णदृष्ट्या बुधः पश्येत् चेद्बुद्धिहीनः स्यात् । यद्वा चन्द्रलग्नेशौ भौमेन पूर्णदृष्ट्या पीडितौ बुद्धिहीनः स्यात्।। ११ ।।

**हिन्दी–** चन्द्रमा लग्न में रहे, शनि साधिकार (गृह-होरा द्रे. आदि से युक्त) दशम में रहे और दशम पर बुध की दृष्टि पड़े तो जातक बुद्धिमान होता है। भौम व चन्द्र लग्न में रहे और बुध सप्तमभाव में रहे तो अथवा चन्द्रमा या लग्नेश पर भौम की पूर्णदृष्टि पड़े तो जातक बुद्धिहीन होता है ।। ११ ।।

कम्पनरोग हृदयरोग-पित्तरोग योग—

**लग्नस्थे रौहिणेये तदनु रविशनी क्रूरदृष्टौ रिपुस्था-**
**वेकर्क्षे चैकभागे भवति गतमतिर्दृष्टिहीनो शुभानाम् ।**
**तिग्मांशौ वैरिनाथे खलविहगयुते तुर्यगे सूर्यसूनौ**
**हृद्रोगी वाक्पतौ वा भवति हृदि नरः कृष्णपित्ती सकम्पः ।।१२।।**

**अन्वयः –** लग्नस्थे रौहिणेये तदनु रविशनि एकर्क्षे एकभागे क्रूरदृष्टौ रिपुस्थौ शुभानां दृष्टिहीनौ गतमतिर्भवति, वैरिनाथे तिग्मांशौ खलविहगयुते तुर्यगे (स्यात्तदा) हद्रोगी स्यात् । सूर्यसूनौ वा वावपतौ (षष्ठे चतुर्थे स्थिते क्रूरदृष्टौ क्रूरसहितौ वा ) तदा नरः हृदि कृष्णपित्ती भवति ।। १२ ।।

लग्नस्थ इति । लग्नस्थे बुधे तदनु क्रूरग्रहेण दृष्टौ शुभग्रदृष्टिरहितौ रविशनी एकराशौ अथवा एकभागे चक्रस्य पूर्वार्द्धे परार्द्धे वा एकत्रगौ षष्ठस्थौ चेत्तदा गतिमतिर्नष्टमतिःस्यात् । षष्ठभावनाथे सूर्ये क्रूरग्रहयुते तुर्यगे सति हृद्रोगी स्यात् । शनौ गुरौ वा षष्ठेशे क्रूरसहिते तुर्यस्थे हृदि कृष्णपित्तरोगी स्यात् , अथवा दुष्टैः पीडितो हृदि सकम्पः स्यात् ।। १२ ।।

**हिन्दी–** बुध लग्न में रहे और सूर्य-शनि शुभग्रह की दृष्टि से वंचित होकर पापग्रह से दृष्ट हों तथा एक ही राशि अंश के होकर षष्ठभाव में रहें तो जातक की बुद्धि नष्ट हो जाती है । सूर्य षष्ठेश होकर पापग्रह के साथ चतुर्थभाव में रहे तो हृदयरोग होता है । शनि या बृहस्पति पापग्रह से युत या दृष्ट होकर षष्ठ या चतुर्थभाव में रहे तो हृदय में कृष्णपित्तरोग होता है या दुष्टों से पीड़ित होने से कम्परोग होता है ।। १२ ।।

व्रण से दुखी योग—

**दुष्टैर्वा पीडितः सन्नथ कुजरविजौ वावपतिर्बन्धुसंस्था**
**हृद्रोगः स्यान्नराणां व्रण इह नियतं क्लेशकारी शरीरे ।**
**पातालस्थो महीजस्तनयनिलयगाः सूर्यवित्सैंहिकेया**
**रन्ध्रस्थो भानुपुत्रो यदि जनुषि तदा स्यान्नरो दुःखभागी।।१३।।**

**अन्वयः–** दृष्टैर्वा पीडितो हृदि सकम्पो भवति । अथ कुजरविजौ वावपतिश्च बन्धु संस्थाः (स्यात्तदा) इह नराणां शरीरे नियतं हृद्रोगः, क्लेशकारी

व्रणश्च, यदि जनुषि महीजः पातालस्थः सूर्यवित्सैंहिकेयाः तनयनिलयगाः भानुपुत्रः रन्ध्रस्थः तदा नरः दुःखभागी स्यात् ।। १३ ।।

दुष्टै इति । अथ कुजः सूर्यजो गुरुश्च चतुर्थस्था यदि तदा इहास्मिन् योगे हृद्रोगाद्धेतोर्नराणां शरीरे क्लेशकारी व्रणः नियमेन स्यात् । यदा जन्म समये भौमश्चतुर्थस्थः सूर्यबुधराहवः पञ्चमस्थाः शनिः अष्टमस्थाः तदा जातो नरोदुःखभागी भवति ।। १३ ।।

**हिन्दी–** भौम शनि व बृहस्पति चतुर्थ भाव में रहें तो निश्चित ही हृदय रोग और अतिदारुणव्रण होता है । भौम चतुर्थ भाव में, सूर्य-बुध-राहु-पञ्चम भाव में और शनि अष्टम भाव में रहे तो जातक दुखभोगी होता है ।। १३ ।।

कायर-साहसी योग—

**लग्नं पश्येन्निजर्क्षे यदि धरणिसुतः संस्थितः कातरः स्या-**
**च्छायासूनुर्नभवस्थो यदि निशि जननं तद्वदत्रापि वाच्यम् ।**
**मूर्तौ भूमीतनुजे स्वजन कलहकृत् द्यूनगे स्वाधिकाराद्**
**हीने भौमे वपुष्मान् परमयुधि रतस्तीक्ष्णभावश्च नूनम् ।। १४ ।।**

**अन्वयः –** यदि निजर्क्षे संस्थितः धरणिसुतः लग्नं पश्येत् (तदा) कातरः स्यात्, यदि छायासूनुः नभःस्थो निशिजननं तदा तद्वदत्रापि वाच्यम्, भुमितनुजे मूर्तौ (चेत्) स्वजन कलहकृत् (भवेत्), स्वाधिकाराद्धीने भौमे द्यूनगे तदा नूनंवपुष्मान् परमयुधि रतः तीक्ष्णभानुश्च ।। १४ ।।

लग्नमिति । स्वक्षेत्रस्थितो भौमो यदि लग्नं पश्येत्तदा जातः कातरः भीरुः स्यात् । यदि शनिर्दशमस्थो रात्रौ जन्म चेदत्रापि तद्वाच्यं कातरः स्यादित्यर्थः । लग्नगे भौमे स्वजनकलहकरः स्यात् । स्वाधिकाराद्धीने स्वगृह-होराद्रेष्काणादिरहिते सप्तमे भौमे वपुष्मान् दृढशरीरः अत्यन्तयुद्धप्रीतिमान् तीक्ष्ण स्वभावश्च स्यात् नूनं निश्चयेन ।। १४ ।।

**हिन्दी–** भौम स्वराशि (मेष-वृश्चिक) का होकर यदि लग्न को देखे तो अथवा दशमभाव में शनि हो और रात्रि का जन्म हो तो जातक कायर होता है । लग्न में यदि भौम हो तो स्वकुटुम्ब से झगड़ा कलह करने वाला होता है । भौम

अपने अधिकार (गृह-होरा द्रेष्काणादि) से हीन होकर सप्तमभाव में रहे तो मोटा शरीर वाला, युद्धप्रिय और क्रूर स्वभाव वाला होता है ।। १४ ।।

विविध स्वभाव योग—

**पश्येतां कामदृष्ट्या धरणिविधुसुतौ चेन्मिथः स्यात्तादानीं-**
**उच्चाकारोऽथ चन्द्रं शनिरविमहिजाश्चेत्प्रपश्यन्ति शीतः ।**
**क्षीणे प्रालेयभानौ धरणिजसहिते पापभूमिः खरः स्यान्**
**मूर्तिस्थो द्यूनदृष्ट्या हिमकरतनयो वासवेज्यं प्रपश्येत् ।। १५ ।।**

**अन्वयः–** धरणि विधु सुतौ कामदृष्ट्या चेन्मिथः पश्येतां तदानीं उच्चाकारः पुरुषः स्यात्, चन्द्रं (चेत्) शनि रवि महिजाः प्रपश्यन्ति तदा शीतः, क्षीणे प्रालेयभानौ धरणिजसहिते पापभूमिः खरः स्यात् मूर्तिस्थो हिमकरतनयो वासवेज्यं प्रपश्येत्तदा हास्यासक्तः ।। १५ ।।

पश्येतामिति । धरणिविधिसुतौ भौमबुधौ मिथश्चान्योन्यं सप्तमदृष्ट्या पश्येतां तदानी जातः उच्चशरीरः स्यात् । अथ शनिरविभौमाश्चन्द्रं पश्यन्ति तदा जातः शीतलस्वभावः स्यात् । शीतलत्वं जडत्वं मूर्खत्वमित्यर्थः । क्षीणे चन्द्रे भौमसहिते पापभूमिः पापकृत्, खरस्तीक्ष्णस्वभावः स्यात्, मूर्तिस्थो बुधः सप्तमस्थं गुरुं पश्येत्तदा जातो हास्यासक्त इत्यग्रिमश्लोकेन सम्बन्धः ।। १५ ।।

**हिन्दी–** भौम और बुध यदि परस्पर एक दूसरे से सप्तम हों तो जातक उच्चशरीराकृति का होता है । शनि-सूर्य व भौम यदि चन्द्रमा को देखें तो जातक शीतप्रकृति (मन्दस्वभाव) का होता है । क्षीण चन्द्र यदि भौम के साथ रहे तो महापापी और क्रोधी होता है । बुध लग्न में स्थित होकर बृहस्पति को सप्तम दृष्टि से देखें तो हास्यप्रिय होता है ।। १५ ।।

विविध स्वभावयोग—

**हास्यासक्तः सभौमे हिमकरतनये स्याच्छुभर्क्षे कुजज्ञौ**
**मन्दर्क्षे वाऽर्कदृष्वौ नरपतिविदुषां रंजने कोविदः स्यात् ।**
**पश्येत्काव्यं सितांशुर्व्ययविलयरिपुस्थानगो विस्मयालुः क्षिप्रं**
**वाक्स्फूर्तिमान् स्यात् कुजबुधशशिनो वीर्यवत्खेटदृष्टाः।।१६।।**

**अन्वयः-** सभौमे हिमकरतनये शुभर्क्षे वा कुजज्ञौ मन्दर्क्षे अर्कदृष्टौ तदा नरपति विदुषां रंजने कोविदः स्यात् । ययविलय रिपुस्थानगो सितांशुः काव्यं पश्येत्तदा विस्मयालुः, कुज बुध राशिनो वीर्यवत्खेटदृष्टाः क्षिप्रं वाक्स्फूर्तिमान स्यात् ।। १६ ।।

हास्यासक्त इति । अथ भौमसहिते बुधे शुभर्क्षे शुभग्रहराशौ यद्वा कुजज्ञौ सूर्यदृष्टौ मन्दराशिस्थौ तदा राज्ञां विदुषां च रञ्जने हर्षोन्मुखीकरणे प्रवीणः स्यात् । त्रिकस्थः चन्द्रः शुक्रं पश्येत्तदा विस्मयालुः विस्मययुक्तः स्यात् । कुजबुधेन्दवः बलिष्ठग्रहदृष्टाश्चेच्छीघ्रं यथा स्यात्तथा वचनस्फूर्तियुक्तः स्यात् ।। १६ ।।

**हिन्दी–** भौम सहित बुध शुभराशि में हों अथवा भौम-बुध शनि की राशि (मकर-कुंभ) में हों और सूर्य की दृष्टि से युक्त हों तो जातक राजाओं तथा विद्वानों को प्रसन्न करने में निपुण होता है । त्रिक स्थान (६-८-१२) में स्थित होकर चन्द्रमा यदि शुक्र को देखे तो जातक विस्मयालु होता है । भौम-बुध और चन्द्र यदि किसी बलीग्रह से दृष्ट हों तो जातक शीघ्र (जल्दी-जल्दी) बोलने वाला होता है ।। १६ ।।

व्यभिचारी योग—

**शुक्रज्ञौ द्यूनयातौ गगनविलयगौ मानवः पुंश्चलः स्यात्**
**कामाज्ञामंदिरस्थौ कविधरणिसुतौ तद्वदाज्ञाम्बुयातौ ।**
**काव्यारौ तद्वदिन्दोर्नभसि रविसुतादास्फुजिन्नीरयायी**
**तद्वत्कामास्पदस्था बुधसितशनयः स्वर्क्षगे भार्गवे हि ।। १७ ।।**

**अन्वयः-** शुक्रज्ञौ द्यूनयातौ गगनविलयगौ (तदा) मानवः पुंश्चलः

स्यात् । कविधरिणि सुतौ कामाज्ञामन्दिरस्थौ (तदा) तद्वत्, काव्यारौ आज्ञाम्बु - यातौ (तद्वत) आस्फुजित् इन्दोः नभसि रविसुतात् नीरयायी तद्वत् बुधसित शनयः कामास्पदस्थाः भार्गवे स्वर्क्षगे (तदा) हि (तद्वत्) ।। १७ ।।

शुक्रज्ञाविति । शुक्रबुधौ सप्तमाष्टमदशमगतौ तदा मानवः पुंश्चलो व्यभिचारी स्यात् । शुक्रभौमौ सप्तमदशमस्थौ तद्वत् पुंश्चलः स्यात् । शुक्रभौमौ चतुर्थदशमगौ तद्वत् पुंश्चलः स्यात् । चन्द्राद्दशमे शुक्रे शनेश्चतुर्थे शुक्रे तदा तद्वत् पुंश्चलः । शुक्रे स्वराशिस्थे शुक्रबुधशनयः सप्तमदशमस्थाः तदा तद्वदित्यनुषङ्गः ।। १७ ।।

**हिन्दी–** जन्म समय में बुध और शुक्र यदि सप्तम अष्टम या दशम भाव में रहें तो अथवा शुक्र और भौम सप्तम या दशम स्थान में रहें तो अथवा शुक्र और भौम सप्तम या दशम स्थान में रहें तो अथवा चन्द्रमा से शुक्र दशम स्थान में तथा शनि चतुर्थ स्थान में रहे तो अथवा बुध-शुक्र और शनि सप्तम व दशम भावगत हों तथा शुक्र स्वराशि में हो तो जातक पुंश्चल (व्यभिचारी) होता है।।१७।।

अपकीर्ति योग—

**प्रालेयांशात्सिताद्वा दिनमणितनयस्तत्पुरोभागवर्ती**
**मूर्तौ चेच्चन्द्रशुक्रौ यदि तरणिसुतं पश्यतश्चायशाः स्यात् ।**
**शेफच्छेदो नराणामथ तपनसुतेभूमिकेन्द्रेऽर्क युक्ते**
**दृष्टे काव्योड्डुपाभ्यां यदि दिवसपतेश्चोपरागोऽत्र तद्वत्।।१८।।**

**अन्वयः-** प्रालेयांशात् सिताद्वा तत्पुरोभागवर्ती दिनमणितनयः (स्यात्) मूर्ती चन्द्र शुक्रौ यदि तरणिसुतं पश्यतश्चेत्तदा अयशाः स्यात् । अर्कयुक्ते तपनसुते भूमिकेन्द्रे काव्योडुपाभ्यां दृष्टे अत्र यदि दिवसपतेः उपरागः तदा नराणां शेफच्छेदः तद्वद् (अयशा) ।। १८ ।।

प्रालेयांशादिति । चन्द्रात् शुक्राद्वा शनिस्तत्पुरोभागवर्ती तदग्रिमभावे स्थितः । चन्द्र-शुक्रौ लग्नस्थौ शनिः पश्यतश्चेत्तदा जातः अयशा अपकीर्तियुतः स्यात् । अथ सूर्ययुते शनौ भूमिकेन्द्रे लग्नस्थे शुक्रचन्द्रदृष्टे सति दिवसपतेः सूर्यस्य चोपरागो ग्रहणं तदा शेफच्छेदः लिङ्गच्छेदः तद्वदपकीर्तिः स्यात्।।१९।।

**हिन्दी–** यदि चन्द्रमा या शुक्र से आगे वाले भाव में शनि हो अथवा लग्न में चन्द्र-शुक्र स्थित होकर शनि को देखें तो जातक अयशी (कलंकित) होता है। सूर्य व शनि लग्न में हों और शुक्र व चन्द्रमा से दृष्ट हों तथा सूर्यग्रहण समय का जन्म हो तो जातक का लिङ्गच्छेद अथवा अपयश होता है ।। १९ ।।

हीनवीर्य योग—

**याते वक्रग्रहर्क्षे जनुषि भृगुसुते मानवस्तोषदायी**
**सीमन्तिन्या रतेः स्यान्न खलु मदनगं भार्गवं लग्ननाथः ।**
**पश्येत्स्वीयालयस्थो यदि रहसि तदा कामिनी तोषदाता**
**न स्यादेवं हिमांशुर्दिनकरसुतयुक् भौमतः खे सुखे वा ।। १९ ।।**

**अन्वयः-** जनुषि भृगुसुते वक्रग्रहर्क्षे याते मानवः सीमन्तिन्या रतेः तोष-दायी न स्यात् । खलु स्वीयालयस्थः लग्ननाथः मदनगं भार्गवं यदि पश्येत्तदा कामिनी तोषदाता न स्यात्, एवं हिमाशुः दिनकरसुतयुक् भौमतः खे वा सुखे तदा रहसि कामिनी तोषदाता न स्यात् ।। १९ ।।

यात इति । शुक्रे वक्रग्रहराशिगते सति मानवो जातः सीमन्तिन्या रतेः सम्भोगाद्धेतोस्तोषदायी सुखदायी सुखदो न स्यात् । स्वीयालयस्थो लग्ननाथः सप्तमगं भार्गवं यदि पश्येत् पूर्णदृष्ट्या इति शेषः तदा जातः रहसि रतिस्थाने कामिनीतोषदाता न स्यादिति । चन्द्रः शनियुतः भौमाच्चतुर्थे दशमे वा स्यात्तदा एवमुक्तप्रकारेण कामिनीतोषदाता न स्यादेव ।। १९ ।।

हिन्दी– शुक्र वक्री ग्रह की राशि में रहे तो अथवा लग्नेश लग्नस्थ होकर सप्तमस्थ शुक्र को देखें तो अथवा शनि व चन्द्रमा भौम से दशम या चतुर्थ स्थानगत हों तो जातक रतिक्रिया में अक्षम होता है ।। १९ ।।

कामी योग—

**क्षोणीपुत्रेण युक्तः प्रथमसुरगुरुर्लग्नतः षष्ठपोऽयं**
**कामाधिक्यं नराणां जनयति नियतं पापदृष्टो विशेषात् ।**
**काव्ये स्वीयालयस्थे तदनु मिथुनगे कामवान्मानवः स्यान्**
**मूर्तौसप्ताश्वसूनौ धनुषि च वृषभे चेत्पुमाल्पकामः ।। २० ।।**

**अन्वयः-** प्रथमसुरगुरुः क्षोणीपुत्रेण युक्तः लग्नतः षष्ठपः अयं नराणां नियतं कामाधिवयं जनयति । पापदृष्टः विशेषात् (कामाधिवयं), काव्येस्वीया-लयस्थे तदनु मिथुनगे मानवः कामवान् स्यात्, सप्ताश्वसूनौ धनुषि च वृषभे मूर्त्तौ चेत्पुमानल्पकामः ।। २० ।।

क्षोणीति । प्रथम सुरगुरुः शुक्रः भौमयुक्तोऽयं लग्नात् षष्ठपः षष्ठभावाधिपः तदा जातानां नराणां कामाधिक्यं कालबलप्रचुरतां नियमेन जनयति । स शुक्रः पापदृष्टश्चेद्विशेषात्कामाधिक्यं जनयति । तदनु शुक्रे स्वभवनस्थे मिथुनस्थे वा मानवः कामवान् स्यात् । सप्ताश्वपुत्रः शनिः धनुषि वृषे वा लग्ने चेत्तदा मानवोऽल्पकामः स्यात् ।। २० ।।

हिन्दी– शुक्र षष्ठेश हो और भौम के साथ हो तो अथवा शुक्र पापग्रह से दृष्ट हो तो जातक कामुक होता है । शुक्र स्वराशि (वृष-तुला) में या मिथुन में हो तो जातक विशेषकामी होता है । शनि धनु या वृषराशि का होकर लग्न में रहे तो जातक अल्पकामी होता है ।। २० ।।

वाचाल योग नेत्र विकृति योग—

**मन्दे नक्रेऽल्पभाषीत्यथ रिपुगृहपे वा सुधांशावदृश्ये**
**चेदर्धे संस्थितेऽङ्को भवति जनिमतां नेत्रयोः क्रूरयुक्ते ।**
**पश्येत्क्षीणं न चन्द्रं यदि भृगुतनयः सूर्यजः पश्यतीन्दुं**
**स्वर्क्षे चन्द्रे नभस्थैर्यदि मदनगतैर्वीक्षिते पापखेटैः ।। २१ ।।**

**अन्वयः-** अथ मन्दे नक्रे अल्पभाषी, रिपुगृहपे वा सुधांशौ अदृश्येऽर्द्धेः संस्थिते क्रूरयुक्ते जनिमतां नेत्रयोः अंको भवति, यदि भृगुतनयः क्षीणं चन्द्रं न पश्येत् सूर्यजः इन्दुं पश्यति स्वर्क्षे चन्द्रे नभस्थैः मदनगतैः पापखेटैः वीक्षिते च नूनमल्पनेत्रः स्यात् ।।२१ ।।

मन्द इति । शनौ मकरस्थे सति अल्पभाषी अप्रयोजनबहुभाषी भवति । तदनु षष्ठभवननाथे चन्द्रे वा क्रूरयुते अदृश्यार्धे संस्थिते सति जनिमतो नेत्रयोरंकश्चिह्नविशेषो भवति । सप्तमभावभोग्यांशमारभ्याष्टमादिक्रमेण लग्नभुक्तांशपर्यन्तमदृश्यार्धं ज्ञेयम् । यदि क्षीणं चन्द्रं शुक्रो न पश्येत् शनिरिन्दुं पश्यति कर्कस्थे चन्द्रे दशमे सप्तमे वा स्थितैः क्रूरग्रहैर्दृष्टे तदा नूनं निश्चयेन स्वल्पनेत्रः स्यादित्यग्रिमपद्येनानव्यः ।। २१ ।।

**हिन्दी–** शनि मकर राशि में हो तो जातक अल्पभाषी होता है । षष्ठेश या चन्द्रमा पापग्रह से युत होकर अदृश्यार्द्ध (सप्तमभाव के भोग्यांश से लग्न के भुक्तांश तक) में रहे तो जातक के आखों में कोई चिन्ह होता है । क्षीण चन्द्रमा शुक्र की दृष्टि से रहित हो और शनि से दृष्ट हों अथवा कर्क राशि का चन्द्रमा हो और सप्तमस्थ व दशमस्थ ग्रह उसे देखें तो निश्चय ही जातक छोटे नेत्रवाला व अल्पदृष्टि वाला होता है ।। २१ ।।

काण नेत्रपीड़ा योग—

**स्यान्नूनं चाल्पनेत्रस्तदनु तनुगतं भूमिजं वा क्षपेशं**
**पश्येद्वाचस्पतिश्चेदसुरकुलगुरुः काणदृङ्मानवः स्यात् ।**
**विच्छाया तिग्मभानोः क्षितिभुवि च पुरोभागगेदृङ्नराणां**
**सौम्ये चिन्हं दृशि स्यादथ वपुषि लये भार्गवे क्रूरदृष्टे ।। २२ ।।**

**अन्वयः-** तदनु वाचस्पति वा असुरकुलगुरुः तनुगतं भूमिजं वा क्षपेशं पश्येत् चेत् (तदा) मानवः काणदृङ् स्यात्, तिग्मभानोः क्षितिभुवि पुरोभागगे नराणां दृक्विच्छाया, तिग्मभानोः सौम्ये पुरोभागगे दृशि चिन्हं स्यात्, अथ वपुषि लये भार्गवे क्रूरदृष्टे ।। २२ ।।

स्यान्नूनमिति । तदनु लग्नस्थं भौमं चन्द्रं वा वाचस्पतिः शुक्रश्च पश्येच्चेत् मानवः काणनेत्रः स्यात् । तिग्मभानोः सूर्यात्पुरोभागगे अग्रगामिनी अस्ताभिलाषिणी भौमे नराणां दृक् विच्छाया कान्तिरहिता स्यात् । सूर्यात् बुधे पुरोभागगे दृशि चिन्हं स्यात् । अथ भार्गवे शुक्रे लग्नस्थेऽष्टमे वा क्रूरदृष्टे सति अश्रुपाताद्धेतोर्नेत्रपीडा स्यादित्यग्रिमश्लोकेन सम्बन्धः ।। २२ ।।

**हिन्दी–** लग्न में चन्द्र या भौम हो और बृहस्पति या शुक्र लग्न को देखें तो जातक काण (एकाक्ष) होता है । सूर्य से आगे (१८- अंशान्तर्गत) भौम हो तो नेत्र की रौशनी कम होती है । सूर्य से आगे (१८ अंशान्तर्गत) बुध हो तो आँखों में चिन्ह होता है । लग्न में शुक्र हो और पापग्रह से पीड़ित हो तो आँखों से पानी गिरने के कारण पीड़ा होती है ।। २२ ।।

नेत्र विकल योग—

**नेत्रे पीडाश्रुपातात्तदनु शशिकुजावेकभावे यदाऽक्ष्णो-**
**श्चिन्हं किंचित्तदानीं ग्रहबलवशतो दृश्यमेवं सुधीभिः ।**
**मार्तण्डे रिष्फयाते तदनु नवमगे पुत्रगे वा खलाढ्ये**
**दृष्टे वा स्यान्मनस्वी सुविकलनयनःसूर्यजे व्याधियुक्तः ।। २३ ।।**

**अन्वयः-** अश्रुपातान्नेत्रयोः पीडा, यदा शशिकुजावेक भावे तदानीं अक्ष्णोः किञ्चिच्चिह्नं, एवं ग्रहबलवशतो सुधिभिः दृश्यम्, खलाढ्ये वा दृष्टे मार्तण्डे रिःफयाते तदनु नवमगे वा पुत्रगे मनस्वी सुविकलनयनः स्यात्, सूर्यजे (क्रूरदृष्टे युते वा रिःफे त्रिकोणे वा ) व्याधियुक्तः ।। २३ ।।

नेत्र इति । तदनु चन्द्रभौमौ एकभागैकनवांशस्थौ तदा नेत्रयोः किञ्चिच्चिह्नं स्यात् । सुधीभिर्योगकर्तुग्रहबलवशात् एवमुक्तप्रकारेणादेश्यं वक्तव्यम् । तदनु क्रूरग्रहदृष्टे युते वा सूर्ये व्ययगे वा नवमे पञ्चमे सति जातः सुविकलनेत्रोऽप्रशस्तनयनः स्यात् । सूर्यजे शनौ क्रूरयुते दृष्टे वा क्रूरैर्द्वादशगे नवमपञ्चमगे वा व्याधियुक्तो रोगी स्यात् ।। २३ ।।

**हिन्दी–** चन्द्र और भौम एक ही राशि में रहें तो नेत्र में चिह्न होता है इस तरह बलवान ग्रहानुसार विद्वानों को विचार करना चाहिए । यदि सूर्य पापग्रह से युत वा दृष्ट होकर द्वादश नवम या पञ्चम भाव में रहे तो जातक मनस्वी और नेत्र से विकल (नेत्ररोग वाला) होता है । शनि पापग्रह से युत या दृष्ट होकर द्वादश-नवम या पञ्चम भाव में रहे तो जातक व्याधियुक्त होता है ।। २३ ।।

दादरोग-वामन योग—

**चन्द्रं पृष्ठोदयस्थं हिबुकगृहगतः सूर्यसूनुः प्रपश्येद्**
**इत्थं लग्नाधिनाथे क्रियभवनगते मानवो वामनः स्यात् ।**
**कोशे पीयूषभानुर्जलचरगृहगः सौरिणा संयुतो वा**
**मार्तण्डे भूमिकेन्द्रे यदि भवति तदा दद्रुमान् पुरुषःस्यात् ।। २४ ।।**

**अन्वयः-** हिबुकगृहगतः सूर्यसूनुः पृष्ठोदयस्थं चन्द्रं प्रपश्येत् इत्थं लग्नाधिनाथे क्रियभवनगते मानवो वामनः स्यात्, जलचर गृहगःपीयूषभानुः कोशे सौरिणा वा संयुतः भवति (एवं) मार्तण्डे भूमिकेन्द्रे यदि भवेत्तदा पुरुषः दद्रुमान् स्यात् ।। २४ ।।

चन्द्रमिति । पृष्ठोदयराशिगं चन्द्रं चतुर्थभावस्थः शनिः प्रपश्येत् । लग्नपे मेषराशिस्थिते जातो मानवो वामनः ह्रस्वकायः स्यात् । जलचरराशिस्थश्चन्द्रः द्वितीये अथवा शनिना युक्ते अथवा सूर्ये लग्नपे यदि तदा पुरुषः दद्रुमान् कुष्ठयुक्तः स्यात् ।। २४ ।।

**हिन्दी–** पृष्ठोदय (मेष-वृष-कर्क-धनु-मकर) राशि में चन्द्र हो और चतुर्थ भावस्थित होकर शनि उसे देखे तथा लग्नेश मेष राशि में हो तो जातक वामन (नाटा) होता है । चन्द्र यदि जलचर (कर्क-मकर-कुम्भ-मीन) राशि में होकर द्वितीय भाव में स्थित हो या शनि से दृष्ट हो तो अथवा सूर्य लग्न में रहे तो जातक को दाद-खाज की बीमारी होती है ।। २४ ।।

प्लीहा-तिल्ली रोग योग—

**दृष्टे क्रूरैर्न सौम्यैर्यदि रिपुगृहपे चोडुपे प्लीहवान् स्या-**
**देवं कामाङ्गनाथे तदनु रविसुतस्तुर्यगोनष्टदृष्टिः ।**
**प्लीही स्याल्लग्ननाथे दिनकरतनये क्रूरनिष्पीडिते चेत्**
**सौख्यायुङ्मानवः स्यात्तनुसदनगते प्लीहवान् हर्षहीनः ।। २५ ।।**

**अन्वयः-** रिपुगृहपे उडुपे च सौम्यैः न क्रूरैर्दृष्टे यदि तदा प्लीहवान् स्यात्, एवं कामाङ्गनाथे (चेत्) तदनु (प्लीहवान्), रविस्तुर्यगो (क्रूरैर्दृष्टे तदा) नष्टदृष्टिः प्लीही स्यात्, लग्ननाथे दिनकरतनये क्रूर निष्पीडिते चेत् मानवः

सौख्ययुक् स्यात्, तनुसदनगते (दिनकरतनये) प्लीहवान हर्षहीन: (भवेत्)।।२५।।

दृष्ट इति । षष्ठभावाधिपे चन्द्रे सौम्यदृष्टिरहिते केवलं क्रूरैर्दृष्टे प्लीहपीडित: स्यात् । एवं कामाङ्गनाथे सप्तमनाथे लग्ननाथे चन्द्रे केवलं क्रूरदृष्टे पलीहवान् स्यात् । पापग्रहैर्दृष्ट: शनिश्चतुर्थश्चेन्नष्टदृष्टि: अन्ध: स्यात् । क्रूरग्रहै: निष्पीडिते दृष्ट्या योगेन वा विकलीकृते यद्वा विजिते लग्नेशे शनौ सौख्यायुक् सौख्यरहित: स्यात् । लग्नगते शनौ प्लीहवान् आनन्दरहितश्च स्यात् ।।२५।।

**हिन्दी–** षष्ठेश और चन्द्रमा शुभग्रह की दृष्टि से हीन हों और केवल पापग्रह की दृष्टि से युक्त हों तो अथवा सप्तमेश और लग्नेश शुभग्रह दृष्टि से रहित और पापग्रह दृष्टि से युक्त हों तो जातक को प्लीहारोग होता है । सूर्य यदि चतुर्थ भाव में रहे और पापग्रह से दृष्ट रहे तो जातक अन्धा तथा प्लीहा रोग युक्त होता है । लग्नेश शनि हो और पापग्रह से युत या दृष्ट हो तो जातक प्लीहारोग युक्त तथा हर्षहीन होता है ।। २५ ।।

शरीर विकल योग—

**क्रूरा: केन्द्रालयस्था वपुषि च विकल: केन्द्रगौ पुष्पवन्तौ**
**किंवा लग्ने प्रपश्येत्कविमिनतनय: श्रोणिभागेऽङ्गहीन: ।**
**काव्य: पातालयायी सुरपति गुरुणा क्वापि युक्तोऽर्कसूनु-**
**र्भौमो वा रौहिणेयो भवति हि विकल: श्रोणिभागे भुजेऽङ्घ्रौ।।२६।।**

**अन्वय:-** क्रूरा: केन्द्रालयस्था (चेत्तदा) वपुषि विकल: (भवेत्) पुष्पवन्तौ केन्द्रगौ (तदाऽपि) विकल:, किं वा लग्ने कविं इनतनय: प्रपश्येत्तदा श्रोणिभागे अङ्गहीन:, सुरपति गुरुणा युक्त: काव्य: पातालयायी अर्कसूनु: रौहिणेय: क्वापि (चेत्) तदा श्रोणीभागे भुजेऽङ्घ्रौ हि विकल: भवति ।। २६ ।।

क्रूरा इति । यदा क्रूरा: केन्द्रहास्तदा जात: वपुषि शरीरे विकल: विकलाङ्ग: स्यात् । पुष्पवन्तौ सूर्यचन्द्रौ केन्द्रगौ वा तदा विकलाङ्ग: । अत्र पुष्पवन्तावित्युक्त्या चन्द्रसूर्ययोरेकराशिस्थितत्वं विवक्ष्यते । चन्द्रस्य क्षीणत्वाद्योगेऽस्मिन् विकल इति भाव: । लग्नस्थं शुक्रं शनि: पश्येत्तदा श्रोणिभागे

कटितटे अङ्गहीनः । शुक्रश्चतुर्थगः गुरुसहितः शनिर्भौमौ बुधो वा यत्र कुत्रस्थितस्तदा कटितटे हस्ते चरणे वा विकलः स्यात् ।। २६ ।।

**हिन्दी–** पापग्रह यदि लग्न में हों तो अथवा सूर्य और चन्द्रमा एक राशि के होकर केन्द्र (१-४-७-१०) में रहें तो जातक विकलाङ्ग होता है । यदि लग्न में शुक्र हो और उसे शनि देखे तो कमर भाग में कष्ट, यदि बृहस्पति से युत शुक्र चतुर्थ भाव में हो या बृहस्पति से युत शनि-भौम या बुध किसी भी स्थान में रहें तो कमर और हाथ-पैर में कष्ट होता है ।। २६ ।।

पंगु खञ्ज योग—

**आयुः पुण्याधिनाथौ यदि खलखचरात्तुर्यगौ पापयुक्तौ**
**जङ्घावैकल्यवान् स्यात्कुजशनिसहिते सैंहिकेये च सूर्ये ।**
**द्वेष्यस्थे तद्वदेवं शनिरिपुगृहपौ रिष्फयातौ खलैश्चेद्**
**दृष्टौ तद्वत्तदानीं रविविधुरविजा वैरिरन्ध्रालयस्थाः ।। २७ ।।**

**अन्वयः-** यदि आयुः पुण्याधिनाथौ पापयुक्तौ खलखचरात् तुर्यगौ (तदा) जंघा वैकल्यवान् स्यात् कुजशनिसहिते सैंहिकेये सूर्ये च द्वेष्यस्थे (चेत्तदा) तद्वत, एवं खलैश्च दृष्टौ शनिरिपु गृहपौ रिःफयातौ चेत्तदानीं (तद्वत्) रवि विधुरविजाः वैरिरन्ध्रालयस्थाः तदानीं पञ्चशाखे आर्ति स्यात् ।। २७ ।।

आयुरिति । निधननवमेशौ क्रूराच्चतुर्थगौ क्रूरयुतौ जङ्घावैकल्यवान् अनुरुः स्यात् । राहौ भौमशनियुते षष्ठगे चकारात् भौमे शनियुते सूर्ये षष्ठगते तद्वत पङ्गुः स्यात् । एवं शनिषष्ठभावेशौ क्रूरदृष्टौ व्ययस्थौ तद्वत् पङ्गुः स्यात् । सूर्यविधुशनयः षष्ठाष्टमभावस्थाः तदानीं तस्य पञ्चशाखे हस्ते आर्तिः पीडा स्यादित्यग्रिमश्लोकेन सम्बन्धः ।। २७ ।।

**हिन्दी–** अष्टमेश व नवमेश पापग्रह से युत होकर चतुर्थ भाव में हों या पापग्रह चतुर्थ भाव में हों तो अथवा भौम व शनि से युत राहु या सूर्य षष्ठ भाव में रहें तो अथवा पापदृष्टि से युत होकर शनि व षष्ठेश यदि द्वादश भाव में रहें तो जंघा प्रदेश में कष्ट होता है । सूर्य-चन्द्र व शनि यदि षष्ठ या अष्टम भाव में हों तो हाथ में विशेष पीड़ा होती है ।। २७ ।।

नपुंसक-काण योग—

**स्यादार्तिः पञ्चशाखे तदनु दशमगे सूर्यसूनौ सिताढ्ये**
**क्लीबः स्यात्सूर्यसूनौ व्ययरिपुगृहगे शुक्रतः क्लीबरोगः ।**
**पश्येत्सूर्यालयस्थो मदनभवनगं भूमिसूनुं सुधांशु-**
**श्चार्कं काणश्च कर्के यदि शुभगृहपो मेषसिंहालिनक्रे ।। २८ ।।**

**अन्वयः-** तदनु सिताढ्यं सूर्यसूनौ दशमगे क्लीबः स्यात्, सूर्यसूनौ शुक्रतः व्ययरिपु गृहगे (चेत्तदा) क्लीबरूपः, सूर्यालयस्थ सुधांशुः मदन भवनगं भूमिसूनुं प्रपश्येत्तदा अथवा कर्के (मदनात् भूमिसूनुं पश्येत्तदा)काणः, यदि शुभ-गृहपो मेषसिंहालिनक्रे स्थितस्तदैव (इमौ योगौ भवेत्) ।। २८ ।।

स्यादार्त्तिरिति । तदनु शुक्रयुते शनौ क्लीबो नपुंसकः स्यात् । शुक्राक्रान्तराशेः व्ययषष्ठगे शनौ क्लीबरूपो रूपेण क्लीबसदृशः न तु क्लीबः । सिंहराशिस्थश्चन्द्रः सप्तमगं भौमं पश्येत्तदा काणः स्यात् । कर्कस्थः सूर्यः सप्तमगं भौमं पश्येत्तदा काणः, उभययोगेऽपि काणः स्याद्यदि नवमपः मेषसिंहवृश्चिकमकरे स्यादिति सम्बन्धः ।। २८ ।।

**हिन्दी–** शुक्र के साथ शनि यदि दशम भाव में रहे तो अथवा शुक्र से द्वादश या षष्ठ स्थान में शनि रहे तो जातक नपुंसक होता है । सिंह राशिगत चन्द्रमा यदि सप्तमभावगत भौम को देखे तो अथवा कर्कराशिगत सूर्य सप्तमभावगत भौम को देखें तो जातक काण (काना) होता है । यह काणयोग नवमेश यदि मेष-सिंह-वृश्चिक या मकर राशि में रहे तभी होता है अन्यथा नहीं होता ।। २८ ।।

नपुंसक योग—

**अन्योन्यं पश्यतश्चेत्तरणिहिमकरौ तत्तनुजौमिथो वा**
**भूसूनुः पश्यतीनं समभवनगतं त्वङ्गचन्द्रौ यदौजे ।**
**ओजर्क्षे युग्मराशौ हिमकरशशिजौ भूसुतेनेक्षितौ चेत्**
**पुंराशौ लग्नशुक्रौ तदनु हिमकरः क्लीबयोगाः षडेते ।। २९ ।।**

**अन्वयः-** ओजर्क्षे युग्मराशौ तरणिहिमकरौ चेदन्योन्यं पश्यतः वा तत्तनूजौ मिथो (पश्यतः) । समभवनगतमिनं (विषमराशितः भौमो पश्येत्) यदा

तु ओजे अङ्गचन्द्रौ (एवं) हिमकरशशिजौ ओजर्क्षे भूसुते नेक्षितौ, पुरांशौ लग्न शुक्रौ तदनु हिमकर: एते षट् क्लीब योगा: ।। २९ ।।

अन्योन्यमिति । सूर्यचन्द्रौ ओजर्क्षे युग्मराशौ इत्याकृष्यान्वय: । अन्योन्यं परस्परं पश्यत: ओजराशिग: सूर्य: समराशिग: चन्द्रं पश्यति तादृशश्चन्द्र: सूर्य पश्यति अयमेकोयोग: । तत्तनुजौ शनिबुधौ ओजराशिगावन्योन्यं पश्यत: द्वितीयो योग: । समराशिगं सूर्यं भौमो विषमराशिगं इत्यर्थात् सिद्धं भौमं च सूर्य: अन्योन्यं पश्यत: इति तृतीयो योग: । लग्नचन्द्रौ विषमराशिगौ भौमेन अर्थात् समराशिगेन दृष्टौ इति चतुर्थो योग: । चन्द्रबुधौ क्रमेण विषमसमराशिगौ भौमेन वीक्षिताविति पञ्चमो योग: । लग्नशुक्रौ चन्द्रश्च पुंराशौ पुरुषग्रहराशिनवांशे स्थिताविति षष्ठोयोग: । एते षट् क्लीबयोगा ज्ञेया: । तदुक्तं सारावल्याम् (८-१८)–

अन्योन्यं रविचन्द्रौ विषमाविषमर्क्षगौ निरीक्षेते ।
इन्दुजरविपुत्रौ वा तथैव नपुंसक कुरुत: ।।
वक्रो विषमगतोऽर्कं समगं चैवं परस्परालोकात् ।
विषमर्क्षे लग्नेन्दु समराशिगत: कुजो विलोकयति ।
शशिशशिजौ समविषमे भौमेन निरीक्षितौ भवत: ।
ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ता । इति ।। २९ ।।

**हिन्दी–** विषमराशि में यदि सूर्य और समराशि में चन्द्र हो तथा दोनों की परस्पर एक दूसरे पर दृष्टि हो तो अथवा समराशि में सूर्य और विषम राशि में चन्द्र हो तथा परस्पर दृष्टि हो तो अथवा सम-विषम राशि में स्थित बुध-शनि की परस्पर दृष्टि हो तो अथवा विषम राशिगत सूर्य को समराशिगत भौम या विषम राशिगत भौम को समराशिगत सूर्य देखे तो अथवा विषमराशिगत चन्द्र और समराशिगत बुध को भौम देखे तो अथवा पुरुष राशि या पुरुषराशि के नवांश में लग्न शुक्र व चन्द्र हों तो जातक नपुंसक होता है ।। २९ ।।

वातव्याधि-अण्डकोशवृद्धि योग—

**आयुः स्थानोपयाते धरणिसुतयुते भार्गवे वातकोपात्**
**काव्ये भौमेन युक्ते कुजभवनगते भूमिजा मुष्कवृद्धिः ।**
**भौमर्क्षे काव्यचन्द्रौ सुरपतिगुरुणा सूर्यजेनाथ दृष्टौ**
**नूनं स्यान्मानवानां जनुषि कललजामुष्कवृद्धिर्नितान्तम् ।। ३० ।।**

**अन्वयः-** धरणिसुतयुते भार्गवे आयुः स्थाने प्रयाते वातकोपात् (एवं) भौमेन युक्ते काव्ये कुज भवनगते भूमिजा मुष्कवृद्धिः, मानवानां जनुषि सुरपति-गुरुणा अथ सूर्यजेन दृष्टौ काव्यचन्द्रौ भौमर्क्षे (चेत्) नूनं नितान्तं कललजा मुष्क वृद्धि स्यात् ।। ३० ।।

आयुरिति । भौमयुते शुक्रेऽष्टमस्थे वातकोपान्मुष्कवृद्धिः वृषणवृद्धिः स्यात् । भौमराशिगते भौमयुते शुक्रे भूमिसंसर्गात् वातकोपजा वृषणवृद्धिः स्यात्। येषां मानवानां जन्म समये भौमराशिस्थौ शुक्रचन्द्रौ गुरुशनिदृष्टौ तेषां कललजा कललदोषजा वृषणवृद्धिः अतिशयिता स्यात् । कललं शुक्रशोणितमिश्रीभावः।।३०।।

**हिन्दी–** यदि भौम से युत शुक्र अष्टमभाव में रहे तो वायु प्रकोप से, यदि भौम से युत होकर शुक्र भौम की राशि (मेष-वृश्चिक) में रहे तो पृथ्वी (माँस-मज्जा) विकार से, यदि शुक्र और चन्द्र भौम की राशि में हों तथा बृहस्पति और शनि से दृष्ट हों तो शुक्र और रक्त विकार से अण्डकोश की वृद्धि होती है ।। ३० ।।

दन्तरोग-बन्धन योग—

**क्रूरैर्दृष्टे विलग्ने सुविकृतदरनश्चापगोमेषसञ्ज्ञे**
**खल्वाटः पापलग्ने धनुषि गवि तथाऽऽलोकिते क्रूरखेटैः ।**
**धर्मार्थान्त्यात्मजस्था यदि खलखचरा बन्धभाक्पुरुषः स्या-**
**देवं लग्ने क्रिये वा धनुषि गवि तथा रश्मिजं बन्धनं नुः ।। ३१ ।।**

**अन्वयः-** चापगोमेष सञ्ज्ञे विलग्ने क्रूरैर्दृष्टे (तदा) सुविकृतरदनः, धनुषि गविपापलग्ने क्रूरखेटैः आलोकिते जातकः खल्वाटः, यदि खलखचराः

धर्मा-र्थान्त्यात्मजस्थाः पुरुषः बन्धभाक् स्यात्, एवं क्रिये वा धनुषि गवि (राशौ-खलाक्रान्ते) नुः रश्मिजं बन्धनं ।। ३१ ।।

क्रूरैरिति । धनुषि वृषे मेषे वा विलग्ने क्रूरैर्दृष्टे विकृतदशनः दन्तरोगी स्यात् । पापलग्ने पापैर्युक्तं लग्नं पापलग्नं तस्मिन् तथा प्रागुक्तयोगे न सांकर्यं स्यात् । तस्मात् क्रूरग्रहयुक्ते धनुषि वृषे वा लग्ने क्रूरदृष्टे खल्वाटो खलतिरोगी स्यात् । नवमद्वितीयद्वादश पञ्चमस्थाः क्रूराश्चेत्तदा बन्धभाक् पुरुषः स्यात् । एवं मेषे धनुषि वृषे वा लग्ने क्रूराक्रान्ते नुः पुरुषस्य रश्मिबन्धनं स्यात् ।। ३१ ।।

हिन्दी– धनु-मेष या वृष राशि लग्न में हो और उसपर पापग्रह की दृष्टि (लग्न) हो तो दन्तरोग होता है । धनु या वृष लग्न हो और पापग्रह से (लग्न) दृष्ट हो तो खल्वाट (गंजा) होता है । पापग्रह नवम-द्वितीय-द्वादश और पञ्चम स्थान में हों तो जातक बन्धन (जेल सजा) भोगने वाला होता है । यदि मेष-वृष या धनु लग्न हो और पापग्रह से युक्त हो तो जातक रस्सी (फाँसी) बन्धन भोगने वाला होता है ।। ३१ ।।

शरीर से मुख से दुर्गन्धि योग—

**दुर्गन्धिर्दानवेज्ये शनिभवनगते मानवो विगृहे स्याद्**
**द्वेष्याधीशे बुधर्क्षे तदनु मकरगे तद्वदत्राथ काव्ये ।**
**केन्द्रस्थे तेन युक् स्यादथ कविरविजौ स्वीयहद्दायुतौ चेत्**
**तद्वच्चन्द्रेऽजयाते तनुसदनगते चानने स्याद्विगन्धिः ।। ३२ ।।**

**अन्वयः-** दानवेज्ये शनिभवनगते मानवो विग्रहे दुर्गन्धिः स्यात्, द्वेष्याधीशे बुधर्क्षे तदनुमकरगे तद्वत्, अथ काव्ये (बुधर्क्षे) तेन युक् केन्द्रस्थे (तद्वत्) अथकविरविजौ स्वीय हद्दायुतौ चेत्तद्वत्, अजयाते चन्द्रे तनुसदनगते आनने विगन्धिः स्यात् ।। ३२ ।।

दुर्गन्धिरिति । शुक्रे शनिराशिस्थे जातो मानवो विग्रहे शरीरे दुर्गन्धिःळ स्यात् । षष्ठाधिपे मिथुनकन्यामकरगे तद्वद्विग्रहे दुर्गन्धिः । अथ काव्ये शुक्रे बुधर्क्षे तेन बुधेन युक्ते केन्द्रगे सति तद्वद्विग्रहे दुर्गन्धिः । अथ शुक्रशनि स्वीयहद्दायुतो स्वत्रिंशांशगौ चेत्तद्विग्रहे दुर्गन्धिः । अत्र छन्दोऽनुरोधात् त्रिशांशो हद्दाशब्देनोपलक्षितः । मेषस्थे चन्द्रे लग्नगते मुखे दुर्गन्धिः स्यात् ।। ३२ ।।

**हिन्दी–** शुक्र यदि शनि की राशि (म. कु.) में रहे तो अथवा षष्ठेश बुध की राशि (मि. क.) में या मकर में हो तो अथवा शुक्र बुध से युक्त होकर केन्द्र (१-४-७-१०) में रहे तो अथवा शुक्र व शनि अपनी-अपनी हद्दा (त्रिशांश) में हों तो जातक का शरीर दुर्गन्धि युक्त होता है । यदि मेष लग्न हो और उसमें चन्द्रमा रहे तो मुख में दुर्गन्धि होती है ।। ३२ ।।

फलकथन में निर्देश—

**एवं ग्रहाणां सदसत्फलानां योगाद्ग्रहज्ञैरनुयोजनीयम् ।**
**शुभाशुभं जन्मनि मानवानां फलं सुमत्या प्रविचार्य नूनम् ।।३३ ।।**

**अन्वय:-** एवं जन्मनि सदसत्फलानां ग्रहाणां योगात् मानवानां शुभाशुभं फलं सुमत्या प्रविचार्य ग्रहज्ञैः नूनमनुयोजनीयम् ।। ३३ ।।

अथ योगाद्दशां सुविचार्येवं कर्त्तव्यं इत्युपजातिकयाऽऽह । एवमिति । ग्रहज्ञैर्ग्रहाणां दीप्तदीनादिज्ञानवृद्धिः मानवानां जन्मनि शुभाशुभफलं सुमत्या ग्रहलग्नज्ञानसंस्कृतया बुद्ध्या विचार्य निश्चयेन वक्तव्यम् । तथोक्तं मृत्युलग्ने–

दशभेदं ग्रहगणितं जातकमवलोक्य विशेषमपि यः ।
कथयति शुभमशुभं वा तस्य न मिथ्याभवेद्वाणी ।।

तथा च प्रदर्शितं नीलकण्ठदैवज्ञैः (नी. क. ३।१९-२१)–

स्वोच्चेदीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः ।
मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहे ग्रहः ।।
शत्रुगृहे स्मृतः सुप्तो जितोऽन्यैश्च निपीडितः ।
नीचाभिमुखगो यस्तु ग्रहः खिन्नस्तु स स्मृतः ।।
सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखगो ग्रहः ।
अधिवीर्यो निगदितः सुरश्मिः शुभवर्गगः ।। ३३ ।।

**हिन्दी–** इस तरह जन्म समय में ग्रहों के योगानुसार जातक के लिए उत्तम रीति से शुभाशुभ फलों का विचार कर दैवज्ञों को फलादेश करना चाहिए।। ३३ ।।

अध्याय उपसंहार—

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलंकाराख्ये जातकेमञ्जुलेऽस्मिन् ।**
**योगाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो रामरामैः प्रणीतः ।। ३ ।।**

।। इति जातकालङ्कारे तृतीयोऽध्यायः ।।

**अन्वयः-** श्री गणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे अस्मिन मंजुले जातके अलंकाराख्ये रामरामैः वृत्तैर्युक्तः योगाध्यायः प्रणीतः ।। ३ ।।

अध्यायं समापयति रामरामैस्त्रयस्त्रिंशद्भिः शेषंसुगमम् ।। ३ ।।

।। इति श्रीहरभानुविरचितायां जातकालङ्कार टीकायां योगाध्यायस्तृतीयः ।।

**हिन्दी–** श्रीगणेश ने हृदय में रखने योग्य सुन्दर पद्यों से युक्त विद्वानों को सन्तोष देने वाले इस सुन्दर जातकालङ्कार ग्रन्थ में ३३ श्लोकों से युक्त योगाध्याय (तृतीय) को बनाया ।। ३ ।।

**विमर्श–** इस अध्याय में प्रथम और तैतींसवें श्लोक को ग्रन्थकार ने गणना में नही रखा है क्योकिं ग्रन्थकार के अनुसार ''वृत्तैरनन्तेश (११०) मतैर्निबद्धं मया" ग्रन्थ में ११० श्लोक ही हैं । यहाँ तृतीय अध्याय में ३१ श्लोक ही ज्यौतिष से सम्बन्धित हैं ।

सत्येन्द्रमिश्र कृत ''प्रज्ञावर्द्धिनी" हिन्दीटीकाया में जातकालङ्कार का योगाध्याय तृतीय समाप्त ।। ३ ।।

## विषकन्यायोगाध्याय:–४

विषकन्या योग—

**भौजङ्गे कृत्तिकायां शतभिषजि तथा सूर्यमन्दारवारे**
**भद्रासञ्ज्ञे तिथौ या किल जननमियात्सा कुमारी विषाख्या ।**
**लग्नस्थौ सौम्यखेटावशुभगगनश्चैक आस्ते ततो द्वौ**
**वैरिक्षेत्रानुयातौ यदि जनुषि तदा सा कुमारी विषाख्या ।। १ ।।**

**अन्वय:-** भौजङ्गे कृत्तिकायां शतभिषजि तथा सूर्य मन्दार वारे भद्रासंज्ञे तिथौ किल या कन्या जननमियात् सा कुमारी विषाख्या, यदि जनुषि सौम्यखेटौ लग्नस्थौ एकश्च अशुभ गगनग आस्ते, ततः द्वौ (पापग्रहौ) वैरिक्षेत्रानुयातौ तदा सा कुमारी विषाख्या ।। १ ।।

अथ त्रिभिः पद्यैर्विशेषतो विषकन्यायोगानाह । भौजङ्ग इति । आश्लेषायां कृत्तिकायां तथा शततारकासु नक्षत्रेषु रविशनिभौमवारेषु भद्रासंज्ञके तिथौ द्वितीया सप्तमी द्वादशीसंज्ञकतिथौ या कन्या जननं इयात् जन्म प्राप्नुयात् सा विषाख्या विषकन्या भवति । अथ नक्षत्रवारतिथीनां प्रत्येकं क्रमेण योगः । यथा आश्लेषा रविर्द्वितीया प्रथमो योगः । कृत्तिका शनिः सप्तमी द्वितीयो योगः । शततारका भौमोद्वादशी तृतीयो योगः । एषु योगेषु जाता कन्या विषाख्येत्यर्थः । द्वौ शुभग्रहौ लग्नपौ एकः पापो दशमस्थः द्वौ पापौ शत्रुभावस्थितौ यदि तत्र कन्या जायते तदा सा विषकन्या भवति ।। १ ।।

**हिन्दी–** श्लेषा-कृत्तिका-शतभिषा इन नक्षत्रों में रवि-शनि-भौम इन वारों में द्वितीया-सप्तमी-द्वादशी इन तिथियों में यदि कन्या का जन्म हो तो वह विषकन्या होती है । इस तरह विषकन्या के तीन योग बनते हैं—

(क) श्लेषानक्षत्र-रविवार-द्वितीयातिथि

(ख) कृत्तिकानक्षत्र-शनिवार-सप्तमीतिथि

(ग) शतभिषानक्षत्र-भौमवार-द्वादशीतिथि

यदि जन्म लग्न में दो शुभ ग्रह हों, दशम में एक पाप ग्रह हो और षष्ठ में दो पाप ग्रह हों तो विषकन्या योग होता है ।। १ ।।

विषाख्य योग—

**मन्दाश्लेषाद्वितीया यदि तदनु कुजे सप्तमी वारुणर्क्षे**
**द्वादश्यां च द्विदैवं दिनमणिदिवसे यज्जनिः सा विषाख्या ।**
**धर्मस्थो भूमिसूनुस्तनुसदनगतः सूर्यसूनुस्तदानीं**
**मार्तण्डः सूनुयातो यदि जनि समये सा कुमारी विषाख्या ।। २ ।।**

**अन्वयः-** यदि मन्दाश्लेषाद्वितीया तदनु कुजे सप्तमी वारुणर्क्षे दिन-मणिदिवसे द्वादश्यां च द्विदैवं (स्यात्तदा) यज्जनिः सा कुमारी विषाख्या । यदि जनिसमये भूमिसूनुधर्मस्थे सूर्यसूनुः तनुसदनगतः मार्तण्डः सूनुयातो तदानीं सा कुमारी विषाख्या ।। २ ।।

अथ क्रमेणापि नक्षत्रतिथिवारयोगानाह । मन्दाश्लेषेति । अथ शनिवारे आश्लेषा द्वितीया, तदनु कुजवारे शततारका सप्तमी दिनमणिदिवसे रविवारे विशाखा द्वादशी, एषु योगत्रयेषु यस्या जन्म सा विषकन्या भवति । यदि जन्मसमये भौमशनिसूर्याः क्रमेण नवम लग्न पञ्चमस्थास्तदा सा कुमारी विषकन्या भवति ।। २ ।।

**हिन्दी–** (क) शनिवार-श्लेषानक्षत्र-द्वितीयातिथि
(ख) भौमवार-शतभिषानक्षत्र-सप्तमीतिथि
(ग) रविवार-विशाखानक्षत्र-द्वादशीतिथि

इन तीनों योगों में यदि किसी कन्या का जन्म हो तो वह विषकन्या होती है । यदि भौम नवमभाव में, शनि लग्न में और सूर्य पञ्चम में रहे तो भी विषकन्या योग होता है ।। २ ।।

विषाख्यभङ्ग योग—

**लग्नादिन्दोः शुभो वा यदि मदनपतिर्द्यूनयायी विषाख्या**
**दोषं चैवानपत्यं तदनु च नियतं हन्ति वैधव्यदोषम् ।**
**इत्थं ज्ञेयं ग्रहज्ञैः सुमतिभिरखिलं योगजातं ग्रहाणां**
**आर्यैरार्यानुमत्या मतमिह गदितं जातके जातकानाम् ।। ३ ।।**

**अन्वयः-** लग्नात् वा इन्दोः मदनपति (वा) शुभः द्यूनयायी (स्यात्) तदा विषाख्यदोषमनपत्यं च तदनु नियतं वैधव्यदोषं च हन्त्येव, इह जातके

सुमतिभिः ग्रहज्ञैः इत्थं आर्यानुमत्या जातकानां गदितमखिलं ग्रहाणां योगजातं मतमार्यैः गदितम् ।। ३ ।।

अथ विषाख्यभङ्गमाह । लग्नादिन्दोरिति । लग्नाच्चन्द्राद्वा मदनपतिः सप्तमपतिः शुभग्रहो वा द्यूनयायी सप्तमस्थः विषाख्यदोषं तत्प्रयुक्तमनपत्यं सन्तानरहितत्वं वैधव्यदोषं च हन्ति नाशयति । एवमुक्तप्रकारेण इहास्मिन् जातके आर्यानुमत्या दैवज्ञसभ्यानुमतेन जातकानां गदितं अखिलं योगजातं ज्ञेयम् । ग्रहाणां स्वभावविशेषाभिज्ञैरेवेदं योगजातं प्रवक्तुं क्षममिति भावः ।। ३ ।।

**हिन्दी–** जन्म लग्न या चन्द्रमा से शुभग्रह या सप्तमेश यदि सप्तमस्थान में हो तो निश्चय ही विषकन्या दोष-अनपत्य (वन्ध्या-मृतवत्सा) दोष और वैधव्यादि दोषों का नाश होता है । इस तरह विद्वान् ज्यौतिषियों द्वारा जातकों के लिए ग्रहानुसार (कथित) योग सब शुभाशुभ फलादेश हेतु जानने योग्य हैं।।३।।

अध्याय उपसंहार—

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**कन्याध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो वह्निसंख्यैर्विषाख्यः ।। ४ ।।**

।। इति जातकालङ्कारे चतुर्थोध्यायः ।।

**अन्वयः-** श्रीगणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे मञ्जुलेऽस्मिन अलंकाराख्ये जातके वह्निसंख्यैर्वृतैर्युक्तो विषकन्याध्यायः ।। ४ ।।

अध्यायं समापयति हृद्यैरित्यादिना ।।

इति श्रीहरभानुविरचितायां जातकालङ्कारटीकायां विषकन्याध्यायश्चतुर्थः ।।

**हिन्दी–** श्री गणेश ने हृदय में रखने योग्य मनोहर सुन्दर पद्यों से सुशोभित विद्वानों को सन्तोष देने वाले इस जातकालङ्कार ग्रन्थ में ती श्लोकों में विषकन्याध्याय (चतुर्थ) की रचना की ।। ४ ।।

**सत्येन्द्रमिश्र कृत ''प्रज्ञावर्द्धिनी" हिन्दी टीका में जातकालङ्कार का विषकन्यायोगाध्याय चतुर्थ समाप्त ।। ४ ।।**

## आयुर्दायाध्याय:–५

आयु का मूल—

**आयुर्मूलं जन्मिनां जीवनं च ह्याजीवानां निर्जराणां सुधेव ।**
**एवं प्राहु: पूर्वमाचार्यवर्यास्तस्मादायुर्दायमेनं प्रवक्ष्ये ।। १ ।।**

**अन्वय:-** निर्जराणां सुधा इव हि आजीवानां जन्मिनां आयुर्मूलं जीवनं एवं पूर्वमाचार्यवर्या: प्राहु:, तस्मादेनमायुर्दायं प्रवक्ष्ये ।। १ ।।

**हिन्दी–** जिस प्रकार देवों के जीवन का मूलतत्व अमृत है उसी तरह सभी प्राणियों के जीवन का मूलतत्व आयुर्दाय है ऐसा पूर्वाचायों ने कहा है । अतएव इस आयुर्दाय को यहाँ कहते हैं ।। १ ।।

दीर्घायु योग—

**लग्नाधीशोऽतिवीर्यो यदि शुभविहगैरीक्षित: केन्द्रयातै-**
**र्दद्यात् आयु: सुदीर्घं गुणगणसहितं श्रीयुतं मानवानाम् ।**
**सौम्या: केन्द्रालयस्था जनुषि च रजनीनायके स्वीयतुङ्गे**
**वीर्याढ्ये लग्ननाथे वपुषि च शरदां षष्टिरायुर्नराणाम् ।। २ ।।**

**अन्वय:-** यदि केन्द्रगतै: शुभविहगै: ईक्षित: लग्नाधीश: अतिवीर्य: (चेत्तदा) मानवानां गुणगणसहितं श्रीयुतं सुदीर्घमायु: दद्यात्, जनुषि सौम्या: केन्द्रालयस्था: रजनीनायके च स्वीयतुङ्गे (तदा) वीर्याढ्ये लग्ननाथे च वपुषि नराणां शरदां षष्टिरायु: (भवेत्) ।। २ ।।

लग्नाधीश इति । लग्नाधीशो लग्नस्वामी केन्द्रयातै: लग्नचतुर्थसप्तमदशमस्थै: शुभग्रहैर्दृष्ट: अतिवीर्य: अधिकतरबलस्तदा जातानां मानवानाङ्गुणगणै: सहितं गुणसमुदायैर्युतं श्रीयुतं लक्ष्मीयुतं च सुदीर्घमायु: दद्यात् सौम्या: बुध-गुरु-शुक्रा: स्वक्षेत्रस्था: चन्द्रे स्वोच्चगे बलवति लग्नेशे सति जातानां नराणां षष्टिरायुर्वर्षाणां षष्टिरायु: स्यात् ।। २ ।।

**हिन्दी–** लग्नेश यदि केन्द्रस्थित शुभग्रहों से दृष्ट होकर पूर्ण बली हो तो वह गुणसमूहों सहित लक्ष्मी और पूर्ण आयु को देता है । यदि शुभग्रह केन्द्र स्थान (१-४-७-१०) में हों, चन्द्र अपनी उच्च (वृष) राशि में हो और लग्नेश बली होकर लग्न में रहे हो जातक ६० वर्ष की आयुवाला होता है ।। २ ।।

आयुमान का योग—

**सौम्याः केन्द्रालयस्था वपुषि सुरगुरौ लग्नतो वा सुधांशो-**
**रायुर्युक्तं न दृष्टं न च गगनगतैः सप्ततिर्वत्सराणाम् ।**
**यातो मूलत्रिकोणे शुभगगनचराः स्वीयतुङ्गे सुरेज्ये**
**लग्नाधीशेऽति वीर्ये गगनवसुसमास्तुल्यमायुर्नराणाम् ।। ३ ।।**

**अन्वयः-** लग्नतः वा सुधांशोः सौम्याः केन्द्रालयस्था वपुषि सुरगुरौ (तथा) गगनगतैः (खलैः) आयुः न युक्तं न च दृष्टं (चेत्तदा) नराणां वत्सराणां सप्ततिः (आयुः), शुभगगनचराः मूलत्रिकोणे याताः, सुरेज्ये स्वीयतुङ्ग, लग्ना-धीशेऽतिवीर्ये (स्यात्तदा) नराणां गगनवसु समातुल्यमायुः ।। ३ ।।

सौम्या इति । लग्नाच्चन्द्राद्वा सौम्याः पूर्णचन्द्रबुधगुरुशुक्राः केन्द्रस्थास्तत्रापिगुरौ लग्नपे तत्र दशमस्थैः क्रूरैरायुरष्टमस्थानं दृष्टं युक्तं यदि न भवति तदा वत्सराणां सप्ततिरायुः स्यात् । शुभग्रहाः मूलत्रिकोणस्थाः गुरौः स्वोच्चगे लग्नेशे बहुबले सति नराणां गगन वसुसङ्ख्यं अशीतिवर्षोपलक्षितं आयुः स्यात् । एतेषु योगेषु गुणगुणयुक्तमित्यनुषंजनीयम् ।। ३ ।।

**हिन्दी–** लग्न में या चन्द्र से शुभग्रह केन्द्र (१-४-७-१०) स्थानों में रहें और अष्टम व दशम भाव पापग्रह से युत या दृष्ट न हों तो ७० वर्ष की आयु होती है । यदि शुभग्रह स्व स्व मूलत्रिकोण में हों, बृहस्पति अपनी उच्च (कर्क) राशि का हो और लग्नेश पूर्ण बलवान हो तो ८० वर्ष की आयु होती है।। ३।।

वर्षादि आयुमान योग—

**सौम्ये केन्द्रेऽतिवीर्ये यदि निधनपदं खेटहीनं समाः स्यु-**
**स्त्रिंशत्सौम्येक्षितं चेद्गगनहिमकरैः संयुताथो स्वभे चेत् ।**
**स्व त्र्यंशे चामरेज्ये मुनिनयनमितं स्वर्क्षगे लग्नगे वा**
**चन्द्रे द्यूने शुभश्चेद्गगनरसमितं कोणगाः सौम्यखेटाः ।। ४ ।।**

**अन्वयः-** सौम्ये अतिवीर्ये केन्द्रे यदि निधनपदं खेटहीनं (स्यात्तदा) त्रिंशत् समाः स्युः । चेत् निधनपदं सौम्येक्षितं (तदा) गगनहिमकरैः संयुता (त्रिंशत्) आयुः, अमरेज्ये चेत्स्वभे स्वत्र्यंशे च मुनिनयनमितं (आयुः), स्वर्क्षगे

(लग्नगे चन्द्रे द्यूने शुभश्चेत्तदा गगनरसमितं (६०) आयु:, सौम्यखेटा: कोणगा: (सन्ति) ।।४।।

सौम्ये इति । सौम्ये बुधेऽतिबले केन्द्रस्थे सति अष्टमपदं खेटहीनं यदि तदा वर्षाणां त्रिंशदायु: स्यात् । निधनं सौम्येक्षित चेत् गगनहिमकरैर्दशभि: संयुता त्रिंशद्वर्षाणां चत्वारिंशदायु: स्यात् । अथ गुरौ स्वराशौ स्वद्रेष्काण सति मुनिनयनमितं सप्तविंशद्वर्षाणि आयु: स्यात् । चन्द्र: स्वर्क्षगो लग्नगो वा सप्तमे शुभग्रहश्चेत्तदा गगनरसमितं षष्टिवर्षमितमायु: स्यात् । शुभग्रहा: पञ्चमनवमस्था: कर्कटे लग्नगे सुरेज्यो यदि भवति तदा खाष्टतुल्यं अशीतिवर्षतुल्यमायु: स्यादित्यग्रिमश्लोकेनान्वय: ।। ४ ।।

**हिन्दी–** बुध पूर्णबली होकर केन्द्र में रहे और अष्टमभाव ग्रह रहित हो तो ३० वर्ष की, यदि अष्टमभाव को शुभग्रह देखता हो तो ४० वर्ष की, बृहस्पति अपनी राशि (ध. मी.) का हो या अपने द्रेष्काण में हो तो २७ वर्ष की, चन्द्रमा यदि स्वराशि (कर्क) में या लग्न में रहे तथा शुभग्रह सप्तम भाव में रहें तो ६० वर्ष की आयु होती है ।। ४ ।।

वर्षादि आयुमान योग—

**कीटे लग्ने सुरेज्ये यदि भवति तदा खाष्टतुल्यं लयेशो-**
**धर्मेऽङ्गे चाङ्गनाथे निधनभवनगे क्रूरदृष्टेऽब्धिहस्ता: ।**
**लग्नाधीशाष्टनाथौ लयभवनगतौ सप्तविंशद्विलग्ने**
**क्रूरेज्यौ चन्द्रदृष्टौ यदि निधनगत: कश्चनास्ते द्विपक्षा: ।। ५ ।।**

**अन्वय:-** सुरेज्ये कीटे लग्ने यदि तदा खाष्टतुल्यं (आयु:) । लयेश: धर्मगे लग्ननाथे क्रूरदृष्टे निधन भवनगे (तदा) अब्धिहस्ता:, लग्नाधीशाष्टनाथौ लयभवनगतौ (चेत्तदा) सप्तविंशत् क्रूरेज्यौ विलग्ने चन्द्रदृष्टौ यदि कश्चन् निधनगत: आस्ते (स्यात्तदा) द्विपक्षा: ।। ५ ।।

कीट इति । अष्टमेशो नवमे भावे लग्नेशे क्रूरदृष्टे अष्टमगते अब्धिहस्ताश्चतुर्विंशतिरायु: स्यात् । लग्नाष्टमेशौ अष्टमस्थौ यदि तदा सप्तविंशति-वर्षाण्यायु: । क्रूरसंयुतो गुरु: चन्द्रदृष्टो लग्ने यदि अन्य: कश्चिद्ग्रह: अष्टमस्थ: तदा द्विपक्षा द्वाविंशतिरायु: स्यात् ।। ५ ।।

**हिन्दी–** बृहस्पति से युत कर्क लग्न हो और शुभग्रह त्रिकोण (९-५) में रहें तो ८० वर्ष की, अष्टमेश नवम भाव में रहे और लग्नेश पापग्रह से दृष्ट होकर अष्टम भाव में रहे तो २४ वर्ष की, लग्नेश-अष्टमेश यदि अष्टमभाव में रहें तो २४ वर्ष की पापग्रह के साथ बृहस्पति लग्न में रहे और चन्द्र से दृष्ट हो तथा अष्टम भाव में कोई भी ग्रह नहीं रहे तो २२ वर्ष की आयु होती है ।। ५ ।।

दीर्घायु योग—

**लग्नेन्दू क्रूरहीनौ वपुषि सुरगुरौ रन्ध्रभं खेटहीनं**
**केन्द्रे सौम्ये खशैला: सितविबुधगुरु स्याच्छतं केन्द्रगौ चेत् ।**
**वागीशे कर्कलग्ने शतमिह भृगुजे केन्द्रगेऽथार्कसूनौ**
**धर्माङ्गस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ।। ६ ।।**

**अन्वय:-** लग्नेन्दु क्रूरहीनौ सुरगुरौ वपुषि रन्ध्रभं खेटहीनं सौम्ये केन्द्रे (यदा) खशैला, सितबिबुधगुरु केन्द्रगौ चेत् शतं (वर्षायु:) स्यात्, वागीशे कर्कलग्ने भृगुजे केन्द्रगे इह शतं (वर्षायु:) अथार्क सूनौ धर्माङ्गस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ।। ६ ।।

लग्नेन्द्विति । लग्नचन्द्रौ क्रूरग्रहयोगरहितौ, लग्ने गुरौ, अष्टमं ग्रहरहितं, केन्द्रे शुभग्रहे यदि तदा खशैला: सप्तति: । शुक्रबृहस्पति केन्द्रगौ चेत् शतं वर्षाणि । गुरौ कर्कलग्ने भृगुजे केन्द्रगे च शतं वर्षाणि । एते विशिष्टयोगा: इत्यर्थ: । योगस्य वैशिष्ट्यं यश: सम्पत्सूचकमिति भाव: । अथ शनौ नवमगे लग्नस्थे वा चन्द्रे व्ययनवमगते वर्षाणां शतमायु: स्यात् ।। ६ ।।

**हिन्दी–** लग्न और चन्द्रमा पापग्रहों के सम्बन्धों से वञ्चित हों, लग्न में बृहस्पति रहे, अष्टम भाव में ग्रह नहीं हो और केन्द्र में शुभग्रह हों तो ७० वर्ष की आयु होती है । शुक्र-बृहस्पति लग्न में रहें अथवा कर्कलग्न हो और उसमें बृहस्पति रहे तथा शुक्र केन्द्र (१-४-७-१०) स्थानों में रहे तो, अथवा शनि नवमभाव या लग्न में हो तो अथवा चन्द्रमा नवमभाव या द्वादश भाव में रहे तो १०० वर्ष की आयु होती है ।। ६ ।।

शतवर्षाधिक आयुयोग—

**धीकेन्द्रायुर्नवस्था यदि खलखचरा नो गुरोर्भेविलग्ने**
**केन्द्रे काव्ये गुरौ वा शुभमपि निधनं सौम्यदृष्टं शतं स्यात् ।**
**लग्नादिन्दोर्न खेटा यदि निधनगता वीर्यभाजौ सितेज्यौ**
**पूर्णायुः स्वीयराशौ शुभगगनचराः षष्टिरङ्गोच्चगेऽब्जे ।। ७ ।।**

**अन्वयः-** यदि खलखचरा धी केन्द्रायुर्नवस्था नो भवेयुः गुरोर्भे विलग्ने केन्द्रे काव्ये गुरौ वा शुभमपि निधनं सौम्यदृष्टं (स्यात्तदा) शतं स्यात् । लग्नादिन्दोः खेटा यदि निधनगताः न, सितेज्यौ वीर्यभाजौ (तदा) षष्टिः (वर्षायुः) ।। ७ ।।

धीति । क्रूरग्रहाः पञ्चमकेन्द्राष्टमनवमस्थाः नोभवेयुः धनुर्मीने लग्ने केन्द्रे शुक्रे वा, गुरौ वा, नवमाष्टमं च शुभग्रहावलोकितं यदि तदा शतं वर्षाण्यायुः स्यात् । लग्नाच्चन्द्राच्च ग्रहा अष्टमस्था न स्युः शुक्रगुरु बलवन्तौ तदा पूर्णायुः व्योमार्कवर्षायुः स्यात् । शुभग्रहाः स्वराशिस्थाः वृषे लग्ने वा चन्द्रे सति वर्षाणां षष्टिरायुः स्यात् ।। ७ ।।

**हिन्दी–** पञ्चमभाव केन्द्रस्थान (१-४-७-१०) और नवमभाव पापग्रह से रहित हों, धनु या मीन लग्न हो, केन्द्र में बृहस्पति या शुक्र रहें, नवमभाव और अष्टमभाव शुभग्रह से दृष्ट हों, तो १०० वर्ष की आयु होती है । लग्न या चन्द्रमा से अष्टमस्थान में यदि कोई भी ग्रह नहीं हो और शुक्र-बृहस्पति बलवान हों तो जातक को पूर्णायु (१२०) होती है । वृष लग्न हो शुभग्रह स्व स्व राशि में हों और चन्द्र लग्नस्थ हो तो ६० वर्ष की आयु होती है ।। ७ ।।

शतवर्षाधिक आयुयोग—

**कोदण्डान्त्यार्धमङ्गं यदि सकलखगाः स्वोच्चगा ज्ञे जिनांशै-**
**र्गोस्थे पूर्णं च केन्द्रे सुरपतिभृगुजौ लाभगेऽब्जेपरायुः**
**शुक्रे मीने तनुस्थे निधनगृहगते सौम्यदृष्टे सुधांशौ**
**जीवे केन्द्रे शतं स्यादथ तनुगृहपे छिद्रगे पुष्करेऽब्जे ।। ८ ।।**

**अन्वयः-** कोदण्डान्त्यार्द्धमङ्गं ज्ञे जिनांशैः गोस्थे यदि सकलखगाः स्वोच्चगाः (स्यात्तदा) पूर्णम् (आयुः) भृगुजौ केन्द्रे अब्जे लाभगे च परायुः

(भवेत्) । शुक्रेमीने तनुस्थे सुधांशौ सौम्यदृष्टे निधन गृहगते जीवेकेन्द्रे शतं (आयुः) स्यात्, अथ तनुगृहपे छिद्रगे अब्जे पुष्करे ।। ८ ।।

कोदण्डेति । कोदण्डस्यान्त्यार्धलग्ने धनुर्लग्नद्वितीयहोरायां बुधे जिनांशैर्वृषस्थे अन्ये सर्वे ग्रहाः स्वोच्चगाः तदा पूर्णमायुः स्यात् । गुरुशुक्रौ केन्द्रे सति लाभगे चन्द्रेपरायुः पूर्णायुः । शुक्रे मीनलग्नगे सौम्यग्रहदृष्टे चन्द्रे अष्टमस्थे, गुरौ केन्द्रे सति वर्षाणां शतमायुः स्यात् । अथवा तनुगृहपे इत्यग्रिमश्लोकेनान्वयः।। ८ ।।

**हिन्दी–** धनुराशि के उत्तरार्द्ध (१५ अंश के बाद) में लग्न हो, बुध वृषराशि में २४ अंश पर हो, शेष (सू. चं. भौ. गु. शु. श.) ग्रह स्व स्व उच्च राशि में हों तो अथवा बृहस्पति शुक्र केन्द्र में हो और चन्द्र एकादश में हो तो पूर्णायु (१२० वर्ष) होती है । मीन लग्न हो उसमें शुक्र स्थित होकर शुभग्रह से दृष्ट हो, चन्द्र अष्टम भाव में हो और बृहस्पति केन्द्र (१-४-७-१०) में हो तो १०० वर्ष की आयु होती है ।। ८ ।।

शतवर्षायु योग—

**वागीशे वीर्ययुक्ते नवमभवनगाः सर्वखेटाः**
**कर्केऽङ्गे जीवचन्द्रौ सहजरिपुभवे सत्कविज्ञौ च केन्द्रे ।**
**केन्द्रे सूर्यारमन्दा गुरुनवलवगा वाक्पतौ लग्नयाते**
**व्यष्टस्थानेषु शेषाः शरगजतुलितं स्यान्नराणां तदायुः ।। ९ ।।**

**अन्वयः-** वागीशे वीर्ययुक्ते यदि नवम भवनगाः सर्वखेटास्तदा शतायुः, कर्केऽङ्गे जीवचन्द्रौ सहजरिपुभवे सत्कविज्ञौ केन्द्रे च (शतायुः), गुरुनवलवगा सूर्यारमन्दाः केन्द्रे वाक्पतौ लग्नयाते शेषा व्यष्टस्थानेषु तदा नराणां शरगज-तुलितं आयुः स्यात् ।। ९ ।।

वागीश इति । लग्नपेऽष्टमस्थे चन्द्रे दशमस्थे गुरौ बलवति अन्ये ग्रहाः नवमभवनगाः तदा शतायुः । कर्के लग्ने चन्द्रजीवौ तृतीयषष्ठैकादशे शुभग्रहयुक्तौ शुक्रबुधौ च केन्द्रे यदि तदापि शतायुः । शतायुरिति देहलीदीपकन्यायेनोभयत्रान्वेति । रविभौम शनयः गुरु नवमांशस्थाः केन्द्रे स्युः,

लग्नस्थे गुरौ, शेषाः अष्टमरहितभावस्थाः तदा नराणां शरगजतुलितं पञ्चाशीतिवर्षमितमायुः स्यात् ।। ९ ।।

**हिन्दी–** लग्नेश अष्टमभाव में और चन्द्र दशमभाव में हो, बृहस्पति बली हो तथा लग्नेश चन्द्रमा व बृहस्पति को छोड़ शेष (सू. भौ. बु. शु. श.) ग्रह नवम भाव में रहें तो अथवा कर्क लग्न हो, बृहस्पति और चन्द्र तृतीय षष्ठ या एकादश भाव में हों, शुक्र और बुध केन्द्र में हों तो १०० वर्ष की आयु होती है । बृहस्पति के नवांश में होकर सूर्य-भौम व शनि केन्द्र (१-४-७-१०) में रहें, बृहस्पति लग्न में रहे और शेषग्रह (च. बु. शु.) अष्टम भाव से अन्यत्र रहें तो ८५ वर्ष की आयु होती है ।। ९ ।।

शतवर्षाधिक आयु योग—

**क्रूराः सौम्यांशयाता उपचयगृहगाः कातराः कण्टकस्थाः**
**सौम्या व्योमार्कसंख्यं यदि तनुपकुजौ रन्ध्रगौ नो परायुः ।**
**केन्द्रे लग्नेशजीवौ नवसुतनिधने कण्टके नो खलाख्याः**
**सम्पूर्णं पापखेटा यदि गुरुजलगा जीवभावे च सौम्याः ।। १० ।।**

**अन्वयः-** सौम्यांश याताः क्रूरा उपचयगृहगाः कातराः सौम्याः कण्टकस्था (स्यात्तदा) व्योमार्क संख्यं (आयुः) यदि तनुपकुजौ रन्ध्रगौ (स्यात्तदा) व्योमार्क संख्यं (आयुः) यदि तनुपकुजौ रन्ध्रगौ (स्यात्तदा) नो परायुः, लग्नेश जीवौ केन्द्रे खलाख्याः नवसुतनिधने कण्टके नो (तदा) सम्पूर्णं यदि पापखेटा गुरुजलगा सौम्याः जीवभावे च ।। १० ।।

क्रूरा इति । शुभग्रहनवांशस्थाः क्रूराः उपचयस्थाः त्रिषट्दशमायस्थाः कातराः सौम्याः कण्टकस्था (स्यात्तदा) व्योमार्कसङ्ख्यं विंशदधिकं शतं वर्षाणि आयुः परायुः स्यात् । परायुर्योगेषु लग्नेशकुजौ अष्टमस्थौ चेत्तदा नो परायुः परायुर्नभवतीत्यर्थः । लग्नेशगुरु केन्द्रस्थौ क्रूरवर्जिताश्चेत्तदापूर्णायुः स्यात् । क्रूरग्रहाः गुरुजलगा नवमचतुर्थगाः शुभाः जीवनवांशस्था यद्वा समराशिनवांशस्थाः सन्तः व्ययधनगृहगाः शुभाः पूर्णचन्द्रः लग्नस्थः इह योगे जातानां शतं वर्षाण्यायुः कथंभूतं इन्दिरामन्दिरं सम्पदासहितामिति अग्रिमश्लोकपूर्वार्धेन सम्बन्धः ।। १० ।।

**हिन्दी–** पापग्रह शुभग्रहों के नवांश में स्थित होकर लग्न से उपचय (३-६-१०-११) स्थानों में विराजमान हों तथा कातर (पराजित) शुभग्रह केन्द्र (१-४-७-१०) में हों तो १२० वर्ष की आयु होती है । इस योग में यदि लग्नेश और भौम अष्टम भाव में रहें तो पूर्णायु (१२०) नहीं होती है । लग्नेश और बृहस्पति केन्द्र (१-४-७-१०) में हों और नवम-पञ्चम तथा अष्टम भाव में कोई भी पापग्रह नहीं हो तो सम्पूर्णायु (१२०) होती है ।। १० ।।

अल्पायु योग—

**युग्मर्क्षांशे गता वा व्ययधनगृहगाश्चेच्छुभा: शीतभानु:**
**सम्पूर्णो लग्नयायी शतमिह जनिनामिन्दिरामन्दिरं स्यात् ।**
**लग्नेशे सौम्ययुक्ते वपुषि च लयपे रन्ध्रगे नान्यदृष्टे**
**विंशत्केन्द्रे लयेशे बलवियुजि तथा लग्नपे त्रिंशदायु: ।। ११ ।।**

**अन्वय:-** वा युग्मर्क्षांशे गता: व्यय निधन गृहगा: सम्पूर्णो शीतभानु: लग्नयायी (तदा) इह जनिनामिन्दिरामन्दिरं शतं (वर्षायु:) स्यात् । सौम्ययुक्ते लग्नेशे वपुषि लयपे रन्ध्रगे नान्यदृष्टे (तदा) विशंत्, बलवियुजि लयेशे तथा लग्नपे केन्द्रे त्रिंशत् आयु: ।। ११ ।।

युग्मेति । शुभग्रहयुक्ते लग्नेशे लग्ने अन्यग्रहैर्न दृष्टेऽष्टमेशेष्टमगते सति वर्षाणां विंशतिरायु: स्यात् । अष्टमेशे लग्नेशे च केन्द्रस्थे बलरहिते च सति त्रिंशद्वर्षाण्यायु: स्यात् ।। ११ ।।

हिन्दी– पापग्रह नवम व चतुर्थभाव में हों, शुभग्रह बृहस्पति के नवांश में या समराशि के नवांश में होकर द्वादश या द्वितीय भाव में स्थित हों और पूर्ण चन्द्रमा लग्न में हो तो जातक सर्वसम्पत्तियुक्त होकर १०० वर्ष की आयु वाला होता है । शुभग्रह से युक्त लग्नेश लग्न में ही रहे और अष्टमेश अष्टम स्थान का होकर अन्यग्रहों की दृष्टि से रहित हो तो २० वर्ष की आयु होती है । लग्नेश और अष्टमेश बलहीन होकर यदि केन्द्र (१-४-७-१०) स्थानों में रहें तो ३० वर्ष की आयु होती है ।। ११ ।।

अल्पायु योग—

**इन्दावापोक्लिमस्थे तदनु तनुपतौ निर्बले पापदृष्टे**
**दन्तैस्तुल्यं ततोऽर्कः खलखगविवरे लग्नगोऽब्जस्त्रिसंख्यम् ।**
**रिष्फे केन्द्रे सुरेज्ये गुरुरिपुसहजे स्यात्सपापेऽङ्गनाथे**
**रामाब्दं कर्कलग्ने कुजतुहिनकारौ केन्द्ररन्ध्रं ग्रहोनम् ।। १२ ।।**

**अन्वयः-** इन्दौ तदनु तनुपतौ निर्बले आपोविलमस्थे पापदृष्टे दन्तैस्तुल्यम् ततः खल खगविवरे लग्नगः अर्कः (तदा) अब्जत्रिसंख्यम्, सुरेज्ये रिःफे (अथवा) केन्द्रे, सपापेऽङ्गनाथे गुरुरिपु सहजे रामाब्दं, कुज तुहिनकरौ कर्कलग्ने केन्द्ररन्ध्रं ग्रहोनं (तदा) रामाब्दं स्यात् ।। १२ ।।

इन्दाविति । चन्द्रे अपोक्लिमस्थे तृतीयषष्ठनवमद्वादशगते, तनुपतौ लग्नेशे आपोक्लिमस्थे उभये निर्बले क्रूरदृष्टे च सति चन्तैस्तुल्यं द्वात्रिंशद्वर्षाण्यायुः स्यात् । क्रूर ग्रहयोरन्तरे लग्नगोऽर्कश्चेत्तदाब्जत्रिसङ्ख्यं एकत्रिंशद्वर्षाण्यायुः । गुरौ द्वादशे केन्द्रे वा सपापे लग्ननाथे नवमषष्ठतृतीये सति रामाब्दं त्रीणि वर्षाण्यायुः । कर्क लग्ने चन्द्रभौमौ, केन्द्राणि अष्टमभवनं च ग्रहरहित यदि तदा रामाब्दं स्यादिति अग्रिमस्थेनान्वयः ।। १२ ।।

**हिन्दी–** बलहीन होकर चन्द्र और लग्नेश आपोक्लिम (३-६-९-१२) स्थान में हों और पापग्रह से दृष्ट हों तो ३२ वर्ष की आयु होती है । लग्नेश यदि दो पापग्रहों के बीच में रहे तो ३० वर्ष की आयु होती है । बृहस्पति द्वादश भाव में या केन्द्र स्थान में हो, पापग्रह से युत होकर लग्नेश तृतीय-षष्ठ या नवम भाव में हो तो अथवा कर्क लग्न हो उसमें चन्द्र व भौम स्थित हों और केन्द्रस्थान तथा अष्टमस्थान शुभ या पाप ग्रह से रहित हो तो ३ वर्ष की आयु होती है ।। १२ ।।

अल्पायु योग—

**रामाब्दं स्याल्लयेशे वपुषि च निधनं सौम्यहीनं खवेदा**
**लग्नेशो रन्ध्रयातो वपुषि निधनपः स्यान्नृणां बाणसंख्यम् ।**
**नक्रे तिग्मांशुमन्दौ सहतरिपुगतौ कण्टके रन्ध्रनाथे**
**पारावाराब्धिसंख्यं तदनु शुभखगाः सल्लवर्क्षेऽत्र खाग्निः ।।१३ ।।**

**अन्वयः-** लयेशे वपुषि (सति) निधनं सौम्यहीनं खवेदाः, लग्नेशो रन्ध्रयातः निधनपः वपुषि (तदा) नृणां बाणसंख्यं (आयुः), तिग्मांशुमन्दौ नक्रे सहजरिपुगतौ रन्ध्रनाथे कण्टके (तदा) पारावाराब्धिसंख्यं (आयुः), तदनु शुभखगाः सल्लवर्क्षे अत्र खाग्नि (आयुः) ।। १ ३ ।।

रामाब्दमिति । अष्टमेशे लग्नगते, अष्टमभवनं शुभग्रहरहितं खवेदाश्चत्वारिंशद्वर्षाण्यायुः स्यात् । लग्नेशेऽष्टमगेऽष्टमेशे च लग्नयाते नृणां बाणसङ्ख्यं पञ्चवर्षाण्यायुः स्यात् । मकरस्थौ शनिरवी तृतीयषष्ठगौ अष्टमेशे केन्द्रगे पारावाराब्धिसङ्ख्यं चतुश्चत्वारिंशद्वर्षाण्यायुः स्यात् । तदनु शुभग्रहाः सल्लवर्क्षे शुभग्रहनवांशे राशौ वाऽत्र त्रिंशद्वर्षाण्यायुः स्यात् ।। १ ३ ।।

अष्टमेश लग्न में हो अष्टमभाव शुभग्रह से रहित हो तो ४० वर्ष की आयु होती है । लग्नेश यदि अष्टमभाव में हों और अष्टमेश लग्न में हो तो ५ वर्ष की आयु होती है । सूर्य व शनि मकरराशि के होकर तृतीय या षष्ठभाव में रहें और अष्टमेश केन्द्र में हो तो ४४ वर्ष की आयु होती है । इस ४४ वर्ष वाले योग में यदि शुभग्रह किसी शुभग्रह की ही राशि या नवांश में रहें तो ३० वर्ष की आयु होती है ।। १ ३ ।।

मध्यमायु योग—

**क्रूरैर्दृष्टेऽङ्गनाथे यदि शुभविहगा वीर्यवन्तः सुधांशौ**
**संस्थे सौम्ये गणे चेद्गुणमुनितुलितं रन्ध्रगैर्मध्यमायुः ।**
**स्याच्चन्द्रादिह पापैरथ तपनसुते द्व्यङ्गलग्ने हि याते**
**रिष्फेशे रन्ध्रनाथे यदि बलरहिते कङ्कपत्राक्षि संख्यम् ।। १४ ।।**

**अन्वयः-** यदि अंगनाथे क्रूरैः दृष्टे शुभविहगा वीर्यवन्तः (एवं) सुधांशौ सौमये गणे संस्थे चेत् गुणमुनि तुलितं (आयुः), अह्निचन्द्रात् रन्ध्रगैः पापैः

मध्यमायुः स्यात्, अथ तपनसुते द्वयङ्गलग्ने याते यदि रिःफेशे बलरहिते हिकङ्कपत्राक्षि संख्यम् (आयुः) ।। १४ ।।

क्रूरैरिति । लग्नेशे क्रूरदृष्टे शुभग्रहाः बलिनः चन्द्रे शुभवर्गगे क्वापिभावे स्थिते सति गुणमुनितुलितं त्रिसप्ततिवर्षतुल्यमायुः स्यात् । चन्द्रादष्टमगैः पापैः दिवा जन्मनि मध्यमायुः स्यात् । अथ शनौ द्वयङ्गे द्विस्वभावसंज्ञके लग्ने स्थिते द्वादशभावनाथे अष्टमनाथे च बलहीनेसति कंकपत्राक्षि सङ्ख्यं पञ्चविशतिवर्षाण्यायुः स्यात् ।। १४ ।।

**हिन्दी–** लग्नेश पापग्रह से दृष्ट हो व शुभग्रह बली हों और चन्द्रमा शुभग्रह के षड्वर्ग में रहे तो ६३ वर्ष की आयु होती है । दिन के समय का जन्म हो और पापग्रह चन्द्र हो अष्टम रहें तो मध्यमायु होती है । शनि यदि द्विस्वभाव लग्न में हो तथा अष्टमेश द्वादशेश बलहीन हों तो २५ वर्ष की आयु होती है ।। १४ ।।

मध्यमायु योग—

**कर्केऽङ्गे सप्तसप्तौ खलविहगयुते पुष्करस्थे द्विजेशे**
**केन्द्रे याते सुरेज्ये शरविशिखमितं पुष्करे नीरगे वा ।**
**सौम्ये पीयूषभानौ व्ययनिधनगते देहगे वा कवीज्या-**
**वेकर्क्षे व्योमबाणैर्व्ययरिपुनिधने लग्नेनाथाढ्यचन्द्रे ।। १५ ।।**

**अन्वयः-** सप्तसप्तौ खलविहगयुते कर्केऽङ्गे, द्विजेशे पुष्करस्थे, सुरेज्ये केन्द्रयाते शरविशिखमितं (आयुः), सौम्ये पुष्करे वा नीरगे, पीयूषभानौ व्ययनिधनगते वा देहगे, कवीज्यौ एकर्क्षे (तदा) व्योमबाणैः (तुल्यायुः), लग्न नाथाढ्यचन्द्रे व्ययरिपुनिधने ।। १५ ।।

कर्केऽङ्ग इति । सूर्ये कर्कलग्ने क्रूरयुते, चन्द्रे दशमगते, गुरौ केन्दस्थे शरविशिखमितं पञ्चपञ्चाशद्वर्षमितमायुः स्यात् । बुधे दशमे चतुर्थगे वा चन्द्रे व्ययेऽष्टमे लग्ने वा शुक्रगुरु एकराशिगौ क्वापि स्थितौ चेत्तदा व्योमबाणैः समं पञ्चाशद्वर्षमितमायुः स्यात् । लग्नेशयुक्ते चन्द्रे द्वादशषष्ठाष्टमे लग्नेशे शन्यंशे शनिनवांशगे भुजगशरमितं अष्टपञ्चाशन्मितमायुः स्यादित्यग्रिमश्लोके नान्वयः।।१५।।

**हिन्दी–** कर्कलग्न हो जिसमें पापग्रह के साथ सूर्य रहे तथा चन्द्रमा दशमस्थान में और बृहस्पति केन्द्र स्थान में रहे तो ५५ वर्ष की आयु होती है । बुध दशम या चतुर्थभाव में हो, चन्द्रमा द्वादश-अष्टम या लग्नस्थान हो तथा बृहस्पति शुक्र एक ही राशि में हों तो ५० वर्ष की आयु होती है । चन्द्रमा लग्नेश के साथ द्वादश-षष्ठ या अष्टम भाव में रहे और लग्नेश शनि के नवांश में रहे तो ५८ वर्ष की आयु होती है ।। १५ ।।

मध्यमायु योग—

**शन्यंशे लग्ननाथे भुजगशरमितं स्यादथो सौम्यखेटा**
**रन्ध्रोना देहनाथो व्ययरिपुनिधने पापयुक् षष्टिरायुः ।**
**राशीशो लग्ननाथो दिनमणिसहितो मृत्युगो वाक्पतिश्चेत्**
**नो केन्द्रो षष्टिरायुर्वपुषि दिनपतिः शत्रुभौमान्वितश्चेत् ।। १६ ।।**

**अन्वयः-** शन्यंशे लग्ननाथे भुजगशरमितं (आयुः) स्यात्, अथ सौम्यखेटा रन्ध्रोना देहनाथो व्ययरिपुनिधने तदा षष्टिः आयुः, दिनमणि सहितो राशीशो लग्ननाथो मृत्युगो वाक्पतिः केन्द्रे नोचेत् (तदा) षष्टिः आयुः, शत्रु भौमान्वितः दिनपतिः वपुषि चेत् ।। १६ ।।

शन्यंश इति । शुभग्रहाः अष्टमव्यतिरिक्तभावस्थाः लग्नेशः पापयुक्तः त्रिकस्थस्तदा षष्टिवर्षाण्यायुः स्यात् । सूर्यसहितश्चन्द्रराशीशः लग्नेशश्च मृत्युगः, गुरुः केन्द्रगो न चेत् षष्टिवर्षाण्यायुः स्यात् । निजशत्रुभौमाभ्यां युक्तः सूर्यो लग्ने गुरौ बलहीने चन्द्रे व्ययपञ्चमस्थे खशैलाः सप्ततिवर्षाण्यायुः स्यादित्यग्रिमश्लोकेनानव्यः ।। १६ ।।

**हिन्दी–** शुभग्रह अष्टमस्थान से अन्यत्र हों, पापग्रह के साथ लग्नेश त्रिक (६-८१२) स्थान में हो तो अथवा सूर्य के साथ जन्मराशि और लग्नेश अष्टम भाव में रहें तथा बृहस्पति केन्द्रस्थान से अन्यत्र रहे तो ६० वर्ष की आयु होती है। शुक्र-शनि-भौम व सूर्य लग्न में हों बृहस्पति हीनबली हो और चन्द्रमा द्वादश या पञ्चम भावगत हो तो ७० वर्ष की आयु होती है ।। १६ ।।

दीर्घायु योग—

**वागीशे हीनवीर्ये व्ययतनुजगते यामिनीशे खशैला**
**धर्मे सर्वैः परायुः खलखगलवगैः केन्द्रेयातैरशीतिः ।**
**क्रूरैः क्रूरर्क्षयातैः शुभभवनगतैः सौम्यखेटैः सवीर्ये**
**लग्नेशे स्यात्परायुः सुतभवनगतैः षष्टिरायुर्नराणाम् ।। १७ ।।**

**अन्वयः-** वागीशे हीनवीर्ये यामिनीशे व्ययतनुजगते खशैलाः, सर्वै धर्मे परायुः, (सर्वैः) खलखगलवगैः केन्द्रयातैः अशीतिः, क्रूरैः क्रूरर्क्षयातैः सौम्य - खेटैः शुभभवनगतैः लग्नेशे सवीर्ये (स्यात्तदा) परायुः स्यात्, (तैः ग्रहैः) सुतभवनगतैः नराणां षष्टिः आयुः ।। १७ ।।

वागीश इति । सर्वैः ग्रहैः धर्मे नवमे सद्भिः परायुः दीघायुः स्यात् । खलखगलवगैः केन्द्रयातैः सर्वैरशीतिः अशीतिवर्षाण्यायुः स्यात् । क्रूरराशिस्थैः क्रूरैः, शुभैः शुभगृहगतैः, लग्नपतौ सबले परायुः स्यात् । सुतभवनगतैः सर्वैः ग्रहैः नराणां षष्टिवर्षाण्यायुः स्यात् ।। १७ ।।

**हिन्दी–** सभीग्रह यदि नवमभाव में रहें तो पूर्णायु होती है । सभीग्रह यदि पापग्रह के नवांश में होकर केन्द्र (१-४-७-१०) में रहें तो ८० वर्ष की आयु होती है । पापग्रह की राशि में पाप ग्रह शुभग्रह की राशि में शुभग्रह हों और लग्नेश पूर्णबली हो तो पूर्णायु (१२० वर्ष) होती है । सभी ग्रह यदि पञ्चम भाव में रहें तो ६० वर्ष की आयु होती है ।। १७ ।।

दीर्घायु योग—

**सारङ्गस्यान्त्यभागे यदि वपुषि गते चाद्यभागे च केन्द्रे**
**सौम्यैः खेटैः शतं स्याद्वसुसहजसुखे स्याच्चिरायुः समस्तैः ।**
**लग्नात्प्रालेयभानोर्निधनसदनपे रिष्फकेन्द्रेऽष्टविंशत्**
**केन्द्रे सौम्यग्रहोने यदि मृतिभवने कश्चिदास्ते खरामाः ।। १८ ।।**

**अन्वयः-** यदि सारङ्गस्य अन्त्यभागे वपुषि गते सौम्यैः खेटैः केन्द्रेगतैः शतं स्यात् समस्तैः वसु सहजसुखे चिरायुः स्यात्, लग्नात् प्रालेयभानोः निधन सदनपे रिःफकेन्द्रे अष्टविंशत् (आयुः), यदि सौम्य ग्रहोने केन्द्रे कश्चित् मृतिभवने आस्ते (तदा) खरामाः ।। १८ ।।

सारङ्गेति । धनुर्धरराश्यन्त्यनवांशे लग्नगे शुभैः प्रथमनवांशस्थैः । केन्द्रगैर्वर्षाणां शतमायुः स्यात् । तृतीयचतुर्थाष्टमस्थैः सर्वैश्चिरायुः स्यात् । लग्नाच्चन्द्राच्च अष्टमेशे व्ययकेन्द्रस्थे अष्टाविंशतिवर्षाण्यायुः स्यात् । केन्द्रे शुभग्रहरहिते अष्टमस्थश्चेत् कश्चिद् ग्रहस्तदा खरामात्रिंशद्वर्षाण्यायुः स्यात्।।१८।।

हिन्दी– धनुराशि का अन्तिम नवांश (धनु) लग्न हो और शुभग्रह केन्द्र में हों तो १०० वर्ष की आयु होती है । लग्न से या चन्द्र से अष्टमेश यदि द्वादशस्थान में या केन्द्रस्थान (१-४-७-१०) में रहे तो २८ वर्ष आयु होती है। केन्द्रस्थानों में कोई भी शुभग्रह नहीं हो और अष्टमभाव में यदि कोई भी ग्रह रहे तो ३० वर्ष की आयु होती है ।। १८ ।।

अल्पायु योग—

**क्षीणे प्रालेयभानौ यदि खलखचरो मृत्युगो मृत्युनाथः**
**केन्द्रस्थो लग्ननाथो निजबलरहितः खाश्वितुल्यं तदायुः ।**
**सौम्यैरापोक्लिमस्थैर्दिनमणिजविधू वैरिरन्ध्रालयस्थौ**
**तुल्यं कामाङ्कुशैः स्यादथ धनमृतिगौः रिष्फगौ पापखेटौ।।१९।।**

**अन्वयः-** प्रालेयभानौ क्षीणे यदि खलखचरः मृत्युगः मृत्युनाथः केन्द्रस्थो लग्ननाथो निजबलरहितः तदा खाश्वितुल्यं आयुः, सौम्यैः आपोक्लिमस्थैः दिनमणिजविधू वैरिरन्ध्रालयस्थौ (तदा) कामाङ्कुशैः तुल्यं स्यात् ।। १९ ।।

क्षीण इति । चन्द्रे क्षीणे सति क्रूरग्रहोऽष्टमस्थः मृत्युभावेशः केन्द्रस्थः लग्नेशो निर्बलस्तदा खाश्वितुल्यं विंशतिवर्षाण्यायुः स्यात् । शुभग्रहैः आपोक्लिमगतैः शनिचन्द्रौ षष्ठाष्टमस्थौ तदा कामांकुशैर्नखैस्तुल्यं विशतिवर्षाण्यायुः स्यात् । अथेत्यग्रिमश्लोके नानव्यः ।। १९ ।।

**हिन्दी–** क्षीण चन्द्रमा हो, पापग्रह अष्टमभाव में हों, अष्टमेश केन्द्र में हो और लग्नेश बलहीन हो तो, अथवा शुभग्रह आपोक्लिम (३-६-९-१२) में हो, शनि व चन्द्र षष्ठ और अष्टम भावगत हों तो, अथवा राहु व चन्द्रमा से रहित

पापग्रह द्वितीय-अष्टम और द्वादश भाव में हों तो २० वर्ष की आयु होती है।।१९।।

अल्पायु योग—

**हीनौ स्वर्भानुना वा यदि हिममहसा व्योमनेत्रप्रमाणं**
**केन्द्रस्थौ सूर्यमन्दौ यदि वपुषि कुजः पुष्पबाणाङ्कुशं स्यात् ।**
**शुक्रेज्यावङ्गयातौ तनयभवनगौ भौमपापावनायुः जन्मेशः**
**सार्कलग्ने खलशुभसहितश्चेक्षितः स्यादनायुः ।। २० ।।**

**अन्वयः-** अथ स्वर्भानुना यदि वा हिममहसा हीनौ पापखेटौ धन मृतिगौ रि:फगौ (तदा) व्योमनेत्रप्रमाण यदि सूर्यमन्दौ केन्द्रस्थौ वपुषि कुजः (तदा) पुष्पबाणाङ्कुशं (आयु) स्यात्, शुक्रेज्यौ अङ्गयातौ, भौमपापौ तनय -भवनगौ (तदा) अनायुः खलशुभ सहितश्चेक्षितः जन्मेशः सार्क लग्ने (तदा) अनायुः स्यात् ।। २० ।।

हीनाविति । अथ राहुचन्द्ररहितौ क्रूरग्रहौ द्वितीयाष्टमद्वादशगौ तदा व्योमनेत्रप्रमाणं विंशतिसङ्ख्यमायुः । सूर्यशनी केन्द्रगौ कुजौ लग्नगस्तदा पुष्पबाणाङ्कुशं विंशद्वर्षाण्यायुः स्यात् । शुक्रगुरू लग्नस्थौ भौमपापौ पञ्चमस्थौ तदा अनायुः अल्पायुः स्यात् । सूर्ययुते लग्ने जन्मेशः जन्मराशीशः अन्यैर्युतो दृष्टश्चेत्तदा अनायुः अल्पायुः स्यात् ।। २० ।।

**हिन्दी–** सूर्य व शनि केन्द्र स्थानों में हों और भौम लग्न में हो तो २० वर्ष की आयु होती है । यदि शुक्र व बृहस्पति लग्न में रहें और पापग्रह से युक्त भौम पञ्चमभाव में हो तो अल्पायु होता है । यदि सूर्य के साथ जन्मराशीश लग्न में रहे और पापग्रह या शुभग्रह से दृष्ट हों तो जातक अल्पायु होता है ।। २० ।।

आयु सार कथन—

**यत्सम्प्रोक्तं योगजं पूर्वमायुर्होरापारावारपारङ्गमज्ञैः ।**
**तस्मादायुः सारभूतं यदेतत्पुण्याचारश्लोकभाजां नराणाम् ।। २१ ।।**

**अन्वयः-** होरापारावार पारङ्गमज्ञैः पूर्वं योगजमायुः यत्सम्प्रोक्तं तस्मात् सारभूतं यदेतत् तदायुः पुण्याचार श्लोकभाजां नराणां (घटते) ।। २१ ।।

यदिति । जातकशास्त्रसमुद्रोत्तीर्णै: समस्तजातकशास्त्रज्ञैरित्यर्थ:, पूर्वं यद्योगजमायु: प्रोक्तं प्रणीतं तस्मात्पूर्वोक्तात् सारभूतं दृढांशभूतं आयुर्यदेतदुक्तं तत्पुण्याचारश्लोकभाजां सदाचारोपलक्षितधर्मयशोयुक्तानां नराणां घटत इत्यध्याहर: ।। २१ ।।

**हिन्दी–** होराशास्त्र रूपी समुद्र में पारंगत दैवज्ञों ने योगों से जायमान जो आयुर्दाय पूर्व में ही कहा है उसका सारांश यहाँ कहा गया है । योगों से जायमान जो अयुर्दाय है वह पुण्यशील-आचारवान्-यशस्वी जन ही प्राप्त कर पाते हैं।।२१।।

आयु कथन निर्देश—

**बलाबलविवेकेन पुष्करालयशालिनाम् ।**
**सुमनोभिरिदमादेश्यमायुर्धर्मादिशालिनाम् ।। २२ ।।**

**अन्वय:-** पुष्करालयशालिनां बलाबलविवेकेन धर्मादिशालिनां इदं आयु: सुमनोभि: आदेश्यम् ।। २२ ।।

अथादेशविधिरनुष्टुभ्वृत्तेनाह । बलावलविवेकेनेति । पुष्करालयशालिनां सूर्यादिग्रहाणां बलावलविचारेण सुमनोभिरिदमायु: कथनीयं धर्मादिशालिनां भवति पापकर्मिणां न भवतीति अर्थात् सिद्धम् ।। २२ ।।

**हिन्दी–** सूर्यादि ग्रहों के बलाबलानुसार ही विचार करके धर्मशील-सदाचारी आदि व्यक्तियों के लिए इस आयुर्दाय का निर्देश करना चाहिए क्योंकि दुराचारी व्यक्ति आयुर्दाय होते हुए भी अल्पायु होते हैं ।। २२ ।।

अध्याय उपसंहार—

**हृद्यै: पद्यैर्गुम्फिते सुरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**आयुर्दाय: श्रीगणेशेन वर्यैर्वृत्तैर्युक्तौ बाहुपक्षै: प्रणीत: ।। ५ ।।**

।। इति जातकालङ्कारे पञ्चमोध्याय: ।।

**अन्वय:-** श्री गणेशेन वर्यै: हृद्यै: पद्यैर्गुम्फिते सूरितोषे अस्मिन् मंजुले अलंकाराख्ये जातके बाहुपक्षै: वृतैर्युक्त: आयुर्दाय: प्रणीत: ।। ५ ।।

हृद्यैरिति । अध्यायं समापयति हृद्यै: पद्यैरिति ।। ५ ।।

।। इति श्रीहरभानुविरचितायां जातकालङ्कार टीकायां आयुर्दायाध्याय: पञ्चम: ।।

**हिन्दी–** श्री गणेश ने हृदय में रखने योग्य मनोहर-सुन्दर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने योग्य इस जातकालङ्कार ग्रन्थ में २२ श्लोकों से इस आयुर्दायाध्याय (पञ्चम) को बनाया ।। ५ ।।

सत्येन्द्रमिश्र कृत ''प्रज्ञावर्द्धिनी" हिन्दी टीका में जातकालङ्कार का आयुर्दायाध्याय पञ्चम समाप्त ।। ५ ।।

**वैपरीत्यस्थभावफलाध्याय:–६**

सुखी योग—

**लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान्स्यात्**
**बुद्ध्याचारप्रवीण: परमसुकृतकृत्सारभृद्भोगशील: ।**
**भ्रातृस्थानेऽङ्गनाथे सहजभवनपे लग्नयातेऽल्पशक्ति:**
**सद्बन्धू राजपूज्य: कुलजनसुखदो मातृपक्षेण युक्त: ।। १ ।।**

**अन्वय:-** चेत् लग्नाधीशे अर्थगे धनभवनपतौ लग्नयाते अर्थवान् बुद्ध्याचार प्रवीण: परम सुकृतकृत् सारभृत् भोगशील:, अङ्गनाथे भ्रातृस्थाने सहजभवनपे लग्नयाते अल्पशक्ति: सद्बन्धु: राजपूज्य: कुलजन सुखदो मातृपक्षेण युक्त: ।। १ ।।

अथ लग्नेशधनेशादीनां व्यत्ययात्फलान्याह । लग्नेति । लग्नेशे धनगे धनेशे लग्नगे सति जातो धनवान् बुद्ध्याचारप्रवीण: बुद्ध्याचारेण च निपुण: उत्कृष्टपुण्यकृत् बलवान् भोगैकशीलश्च स्यात् । लग्नेशे सहजस्थे सहजेशे लग्नस्थे अल्पवीर्य:, प्रशस्तबन्धुयुक्त:, राज्यपूज्य, कुलजातानां सुखद:, मातृपक्षेणसहितश्च स्यात् ।। १ ।।

**★प्रज्ञावर्द्धिनी★**

**हिन्दी–** जन्म समय में लग्नेश द्वितीय भाव में हो और द्वितीयेश लग्न में हो तो जातक धनवान-बुद्धिमान-आचारशील और भोगशील होता है । लग्नेश तृतीय भाव में और तृतीयेश तृतीय भाव में हो तो जातक अल्पशक्तिवाला-उत्तम बन्धु युक्त-राजमान्य-स्वकुल को सुख देने वाला और मातृपक्ष (मातुलवर्ग) से युक्त होता है ।। १ ।।

कुलप्रसिद्ध योग—

**तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे स्यात् क्षमावान्**
**ताताज्ञाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः ।**
**लग्नस्थे सूनुनाथे तनुनाथे तनुजपदगते लग्ननाथे मनस्वी**
**विद्यालङ्कारयुक्तो निजकुलविदितो ज्ञानवान्मानसक्तः ।। २ ।।**

**अन्वयः-** तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे (स्यात्तदा) क्षमावान्, ताताज्ञाराजकार्य प्रगुणमतियुतः सदगुरुः स्वीयपक्षः, सूनुनाथे लग्ननाथे तनुजपदगते मनस्वी विद्यालङ्कार युक्तो निजकुलविदितो ज्ञानवान् मानसक्तः ।। २ ।।

तुर्येश इति । चतुर्थे लग्नेशे, लग्नगे चतुर्थेशे जातः क्षमायुक्तः ताताज्ञाराजकार्यप्रगुणमतियुक्तः पितुराज्ञायां राजकार्ये च ऋजुमतिःसन् प्रशस्तो गुरुर्यस्य यद्वा सतो गुरुः स्वकीयपक्षे च स्थितः स्यात् । पञ्चमेशे लग्ने लग्नेशे पञ्चमस्थे सति नरः प्रशस्तमनाः विद्यया भूषितः स्वकुले विख्यातो ज्ञानवान् सद्सद्वस्तुज्ञः माने अभिमाने सक्तः स्यादिति ।। २ ।।

हिन्दी– लग्नेश चतुर्थ भाव में हो और चतुर्थेश लग्न में हो तो जातक क्षमाशील-पितृभक्त-राजकार्य में पारगंत-उद्दामगुरु से शिक्षित, अपने पक्ष की बात करने वाला और बन्धुवर्ग का प्रिय करने वाला होता है । लग्नेश पञ्चमभाव में हो और पञ्चमेश लग्न में हो तो यशस्वी-विद्वान-गुणी-स्वकुल में प्रमुख ज्ञानी और स्वाभिमानी होता है ।। २ ।।

षष्ठेश लग्नेश से स्वभाव योग—

**षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे व्याधिहीनो**
**नित्यं द्रोहादिसक्तो वपुषि स बलवान् द्रव्यमान् सङ्ग्रही स्यात् ।**
**मूर्तीशे कामयाते मदनसदनपे मूर्तिगे तातसेवी लोलास्वान्तोऽ-**
**ङ्गनायां भवति हि मनुजः सेवकः शालकस्य ।। ३ ।।**

**अन्वयः-** षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे (स्यात्तदा) व्याधिहीनः नित्यं द्रोहादि सक्तः, वपुषि सबलवान् द्रव्यवान् सङ्ग्रही स्यात्, यदि मूर्तिशे कामयाते मदनसदनपे मूर्तिगे (चेत्तदा) मनुजः तातसेवी, हि अङ्गनायां लोलस्वान्तः शालकस्य सेवकः भवति ।। ३ ।।

षष्ठेश इति । षष्ठेशे लग्नगे तदनु लग्नेशे षष्ठगे सति नित्यं रोगरहितः अतएव शरीरे बलवान्, द्रोहादौ सक्तः आदिशब्देन परानिष्टकरणादिज्ञेयं, सङ्ग्रहपरः अतो द्रव्यवान् स्यात् । लग्नेशे सप्तमस्थे सप्तमेशे लग्नस्थे सति तदा मनुजः पितृभक्तः स्त्रीविषये चञ्चलमनाः शालकस्य भार्याभ्रातुः कार्यकरः स्यात् ।। ३ ।।

**हिन्दी–** लग्नेश षष्ठभाव में हो और षष्ठेश लग्न में हो तो जातक निरोगी-परद्रोही-पुष्ट शरीरवाला-बली-धनवान और वस्तुसङ्ग्रही होता है । लग्नेश सप्तमभाव में हो और सप्तमेश लग्न में हो तो पिता का सेवक-स्त्री के लिए चञ्चल मन वाला और साले का प्रिय करने वाला होता है ।। ३ ।।

ठग-जुआरी-राजमान्य योग—

**अङ्गेशे रन्ध्रयाते निधनगृहपतावङ्गगे द्यूतबुद्धिः**
**शूरश्चौर्यादिसक्तो निधनपदमियाद्भूपतेर्लोकतो वा ।**
**देहाधीशे शुभस्थे शुभभवनपतौ देहसंस्थे विदेशी**
**धर्मासक्तो नितान्तं सुरगुरुभजने तत्परो राजमान्यः ।। ४ ।।**

**अन्वयः-** अङ्गेशे रन्ध्रयाते निधनगृहपतौ अङ्गगे (चेत्तदा) द्यूतबुद्धिः शूरः चौर्यादिसक्तो भूपतेर्लोकतो वा निधनपदमियात्, देहाधीशः शुभस्थे शुभ भवनपतौ देहसंस्थे (चेत्तदा) विदेशी, नितान्तं धर्मासक्तः, सुरगुरुभजने तत्परः राजमान्यः ।। ४ ।।

अङ्गेश इति । लग्नेशेऽष्टमेशे लग्नगे द्यूतव्यवहारे निपुणः विक्रमवान् चौर्यादि सहितः आदिशब्देन वञ्चनासु निपुणः, राजतो लोकतो वा निधन-पदं मरणमाप्नुयात् । लग्नेशे नवमस्थे नवमेशे लग्नस्थे सति विदेशवासी नितान्तं धर्मे रतः देवाराधने गुरुसेवायां च तत्परः राजसत्कारभाजनं स्यात् ।। ४ ।।

**हिन्दी–** यदि लग्नेश अष्टमभाव में हो और अष्टमेश लग्न में हो तो जुआड़ी साहसी चौरकर्मासक्त तथा राजा या किसी अन्य से मृत्यु प्राप्त करने वाला होता है । लग्नेश नवम भाव में हो और नवमेश लग्न में हो तो परदेशी अतिधार्मिक देव गुरु का सेवक और राजमान्य होता है ।। ४ ।।

भाग्यवान योग—

**कर्मस्थे लग्ननाथे गगनभवनपे लग्नगे भूपतिः स्यात्**
**ख्यातो लाभे च रुपे गुरुभजनरतो लोलुपो द्रव्यनाथः ।**
**लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे सुकर्मा दीर्घायुः**
**क्षोणिनाथः शुभविभवयुतः कोविदो मानवः स्यात् ।। ५ ।।**

**अन्वयः-** लग्ननाथे कर्मस्थे गगनभवनपे लग्नगे (चेत्) भूपतिः रूपे लाभे च ख्यातः गुरु भजनरतः लोलुपः द्रव्यनाथः स्यात् । लाभेशे लग्नयाते तनु भवनपतौ लाभसंस्थे मानवः सुकर्मा दीर्घायुः क्षोणिनाथः शुभविभवयुतः कोविदः स्यात् ।। ५ ।।

कर्मस्थ इति । लग्नेशे कर्मस्थे, कर्मनाथे लग्नगे भूपालः, लाभेन तद्वत्सुरूपेणा च विख्यातः, गुरूसेवायां प्रीतिमान्, लोलुपः चञ्चलचित्तः, द्रव्याणां स्वामी च स्यात् । लाभेशे लग्नस्थे लग्नेशे लाभस्थे शोभनकर्मा, दीर्घायुः, क्षोणीनाथः राजा, शुभविभवयुतः कोविदो धीरश्च मानवः स्यात् ।। ५ ।।

**हिन्दी–** लग्नेश दशम भाव में हो और दशमेश लग्न में हो तो जातक राजा तुल्य ऐश्वर्यशाली, लाभ करने वाला, शरीर से सुन्दर, गुरु जनों की सेवा में तत्पर, चञ्चलप्रवृति का और धनवान होता है । लग्नेश एकादश में हो और एकादशेन लग्न में हो तो उत्तम कार्य करने वाला-दीर्घायु-भूमिपति-उद्रामसम्पत्ति से युक्त और विद्वान होता है ।। ५ ।।

भावानुसार विचारणीय—

**लग्नेशे रिष्फयाते व्ययसदनपतौ लग्नगे सर्वशत्रु-**
**र्बुद्ध्या हीनो नितान्तं कृपणतरमतिद्रव्यनाशी विलोलः ।**
**इत्थं तातादिकानामपि जनुषि तथा खेचराणां हि योगाद्**
**वाच्यं होरागमज्ञैस्तदनु तनुपयुक् भार्गवे राजपूज्यः ।। ६ ।।**

**अन्वयः-** लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सति सर्वशत्रुः नितान्तं बुद्ध्याहीनो कृपणतरमपि द्रव्यनाशी विलोलः, इत्थं होरागमज्ञैः जनुषि खेचराणां हि योगात् तातादिकानामपि वाच्यम् तदनु तनु तनुपयुग्भार्गवे (त्रिकतः अतिरिक्ते) राजपूज्यः ।। ६ ।।

लग्नेश इति । लग्नेशे रिष्फयाते व्ययनाथे लग्नगे सति सर्वशत्रुः सर्वेषां जनानां शत्रुः सर्वे शत्रवो यस्येति वा यतो निरनन्तरं बुद्ध्या हीनः बुद्धिरहितः कृपणतरमतिः अतश्च द्रव्यनाशी विलोलः निर्विचारी शीघ्रकारी च स्यात् । इत्थमुक्तप्रकारेण जातक जन्मसमये तातादिकानामपि खेचराणां योगात् फलं होरागमज्ञैर्वक्तव्यम् अयमर्थः-जातकस्य जन्मलग्नाद्दशमं भवनं तातगृहं तदेवलग्नं प्रकल्प्य तदग्रिमान् क्रमेण धनादिभावान् परिकल्प्य तत्र लग्नभावेशयोर्व्यत्ययस्थितिमवलोक्य लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान्स्यादित्यादिना उक्तोदाहरणेन तातादीनां अर्थवत्वादिफलं होराशास्त्रज्ञैर्वाच्यम् । अथ मङ्गलाय शुभफले आदेशं समापयति । तदनु तनुपयुक् भार्गवे लग्नेशयुक्ते शुक्रे त्रिकव्यतिरिक्तभावग इति शेषात्तत्रजातो राजपूज्यो भवति राजपूज्यशब्देन वाञ्छितपदार्थानां सौलभ्यं ध्वन्यते ।। ६ ।।

**हिन्दी–** लग्नेश द्वादश भाव में हों और द्वादशेश लग्न में हो तो वह सबसे शत्रुता रखने वाला मूर्ख-अतिकंजूस-व्यर्थ व्यय करने वाला और नीचप्रकृति का होता है । इसी तरह जातकशास्त्र ज्ञाताओं को पिता भाई का भी विचार करना चाहिए । लग्नेश यदि शुक्र से युत होकर त्रिक (६-८-१२) स्थान से अन्यत्र रहे तो जातक राजमान्य और मनोभिलषित कार्य सिद्ध करने वाला होता है ।। ६ ।।

ग्रन्थकार-निवेदन—

**एवं सुमत्या सुफलप्रबोधं श्रीजातकालङ्करणं मनोज्ञम् ।**
**वृत्तैरनंतेशमितैर्निबद्धं मया मुदे दैवविदामुदारम् ।। ७ ।।**

**अन्वयः-** एवं मया स्वमत्या सुफल प्रबोधं मनोज्ञम् उदारं स्त्रीजात-कालंकरणं दैवविदां मुदे अनन्तेशमितैः वृत्तैः निबद्धम् ।। ७ ।।

एवमिति । एवमुक्तप्रकारेण मया गणेशेन स्वबुद्ध्या उदारं सारनिरूपणं मनोज्ञं पदपदार्थरुचिरं सुफलप्रबोधं स्फुटफलजनकं दैवज्ञानां प्रमोदाय अनन्तेशमितैर्दशाधिकशतप्रमितैर्वृत्तैः श्रीजातकालङ्करणं निबद्धं विरचितम्।।७।।

**हिन्दी–** इस प्रकार स्वबुद्ध्यानुसार मैंने (गणेश) सुन्दर-मनोहर फलाफलों के बोधार्थ और उदारभावयुक्त ज्यौतिषज्ञों के प्रसन्नार्थ १ १ ० श्लोकों में जातकालङ्कार नामक इस ग्रन्थ को बनाया ।। ७ ।।

ग्रन्थकार-प्रार्थना—

**पुष्करालयवशा गुणसारा जातकोक्तिरमलेव मराला ।**
**संस्कृता विरहतां भवतां मे मानसेऽतिसरलेसुकवीनाम् ।। ८ ।।**

**अन्वयः-** पुष्करालयवशा गुणसारा संस्कृता, मे जातकोक्तिः भवतां सुकवीनामतिसरले मानसे अमला मराला इव विहरताम् ।। ८ ।।

अथ स्वरचितग्रन्थस्य कविमनोरुचिरत्वं प्रार्थ्यते । पुष्करेति । मे मम जातकोक्तिःभवतां पूज्यानां कवीनां अतिसरले मानसे निर्मला मराला हंसीव विहरताम् । कथंभूता जातकोक्तिः पुष्करालयवशा पुष्करमाकाशं पदेवालयो येषां ते पुष्करालयाः ग्रहाः तेषां वशाऽधीना शुभाशुभसूचकग्रहोपयोज्या इत्यर्थः । हंसीपक्षे-पुष्करं जलं तस्यालयो मानसं सरः तद्वशवर्तिनीत्यर्थः । गुणसारा जातकगुणानां सारोपदेशोऽर्थो यस्यां सा । हंसीपक्षे गुणसारा विहितगुणाद्यैर्युक्ता 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इति अभिधानात् । अमला शुद्धा दोषरहिता इत्यर्थः । हंसी पक्षेऽमला निर्मलेत्यर्थः । संस्कृतामनोज्ञादिवाक्यपरिष्कृता, हंसीपक्षे-निसर्गरुचिरा इत्यर्थः ।। ८ ।।

**हिन्दी–** ग्रहों के वशीभूत जातकशास्त्र है और उसका सारतत्व रूप सुसंस्कृत रूप में जो यह जातकालङ्कार नामक ग्रन्थ है वह विज्ञजनों के मनरूपी अत्यन्तपवित्र सरोवर में मराली (हंसी) की तरह विहार करे ।। ९ ।।

अध्याय उपसंहार—

**हृद्यैः पद्यैर्गुम्फितेसूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**भावाध्यायः श्रीगणेशेन वर्यैवृत्तैर्युक्तोऽष्टाभिरेषः प्रणीतः ।। ६ ।।**

।। इति जातकालङ्कारे पञ्चमोऽध्यायः ।।

**अन्वयः-** श्री गणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे अस्मिन् मञ्जुले अलङ्काराख्ये जातके अष्टाभिर्वृत्तैः युक्तः एष भावाध्यायः प्रणीतः ।। ६ ।।

हृद्यैरिति । अध्यायं समापयति हृद्यैः पद्यैरिति स्पष्टार्थः ।। ६ ।।

।। इति श्री हरभानुविरचितायां जातकालङ्कार टीकायामायुर्दायाध्याय: षष्ठ: ।।

हिन्दी– श्री गणेश ने हृदय में रखने योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने वाले इस जातकालङ्कार गन्थ में ८ श्लोकों में वैपरीत्यभावफलाध्याय (षष्ठ) की रचना की ।। ६ ।।

**सत्येन्द्रमिश्र कृत ''प्रज्ञावर्द्धिनी'' हिन्दीटीकाया में जातकालङ्कार का वैपरीत्यभावफलाध्याय षष्ठ समाप्त ।। ६ ।।**

**वंशाध्याय:–७**

ग्रन्थकार वंशवर्णन—

**अभूदवनिमण्डले गणकमण्डलाखण्डल:**
**श्रुतिस्मृतिविहारभूर्विबुधमण्डलीमण्नम् ।**
**प्रचण्डगुणगुर्जराधिपसभातप्रभ:**
**कवीन्द्रकुलभूषणं जगति कान्हजीकोविद: ।। १ ।।**

**अन्वय:-** अवनिमण्डले (भारद्वाजगोत्रे) जगति गणकमण्डलाखण्डल: श्रुतिस्मृतिविहारभू: विबुधमण्डली- मण्डनं कवीन्द्रकुलभूषणं प्रचण्डगुणगुर्जराधिप सभाप्रभातप्रभ: कान्हजीकोविद: अभूत् ।। १ ।।

अथ विशिष्टं स्ववंशं सङ्ख्यापयन् ग्रन्थ समाप्तौ देशकालविशेषं प्रख्यापयति त्रिभि: पृथ्वीशार्दूलविक्रीडितैर्वृतै: । अभूदिति । अवनिमण्डले भारद्वाजकुले नाम्ना कान्हजीकोविद: पण्डित: अभूत् स कीदृश: ? जगति लोके गणकमण्डलाऽखण्डलो ज्योतिर्विद्वृन्दे आचार्य: ''स्युरुत्तरपदेव्याघ्र पुङ्गवर्षभकुंजरा: । सिंहशार्दूलनागाद्या: पुंसि श्रेष्ठार्थगोचरा:" इत्यभिधानात् । श्रुतिस्मृतिविहारभू: प्रत्यहं श्रुतिस्मृतिप्रतिपादनद्वारा तासां विहारभूमि: विबुधमण्डलीमण्डनं पण्डितशोभादायक इत्यर्थ: । प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभ: प्रचण्डा: रिपुविजयशालिनो गुणा: सन्धिविग्रहादयो यस्य स गुर्जराधिप: गुर्जरदेशाधिप: तस्य सभायां प्रभातप्रभेव सभाप्रकाशक इत्यर्थ: । कवीन्द्रकुलभूषणं कवि श्रेष्ठसंदोहस्य प्रभावह: ।। १ ।।

**हिन्दी–** इस भूमण्डल में विख्यात गुण यश वाले गुर्जराधिपति की सभा को सुशोभित करने वाले दैवज्ञों में प्रमुख, पण्डितों का हर्षवर्धन करने वाले, श्रुति स्मृति में विहार करने वाले, कविकुल शिरोमणि जगद्विख्यात श्रीकान्हजी नामक विद्वान हुए ।। १ ।।

**भारद्वाजकुले बभूव परमं तस्मात्सुतानां त्रयं**
**ज्यायाँस्तेष्वभवद्ग्रहज्ञतिलकः श्रीसूर्यदासः सुधीः ।**
**श्रीमान् सर्वकलानिधिस्तदनुजो गोपालनामाऽभव-**
**च्छ्रीमद्दैवविदां वरस्तदनुजः श्रीरामकृष्णोऽभवत् ।। २ ।।**

**अन्वयः-** भारद्वाजकुले तस्मात् परमं सुतानां त्रयं बभूव । तेषु ग्रहज्ञ-तिलकः सुधीः श्रीसूर्यदासः ज्यायान् अभवत् । ततस्तदनुजः श्रीमान सर्वकला-निधिः गोपालनामा अभवत् तदनुजः दैवविदां वरः श्रीरामकृष्णोऽभवत् ।। २ ।।

भारेति । तस्मात्कान्हजीकोविदात्परमं उत्कृष्टं सुतानां त्रयं बभूव । तेषु ज्यायान् ज्येष्ठः ग्रहज्ञतिलकः गणकश्रेष्ठः सुधीः श्रीसूर्यदासः अभवत्तदनुजः ततः पश्चाज्जातः श्रीमान् वेदवित् सर्वकलानिधिः सर्वकलाकुशलः गोपालनामा अभवत् । तदनुजः श्रीमतां दैवज्ञानां च श्रेष्ठः श्रीरामकृष्णोऽभवत् ।। २ ।।

**हिन्दी–** भारद्वाज गोत्रीय श्रीकान्हजी के श्रेष्ठगुणों से सम्पन्न तीन पुत्र हुए। सबसे ज्येष्ठ श्री सूर्यदास दैवज्ञों में श्रेष्ठ विद्वान हुए । उनसे छोटे श्रीगोपालदास सर्ववेदवित्-कलानिधिज्ञ हुए । सबसे छोटे श्री रामकृष्ण दैवज्ञश्रेष्ठ हुए ।। २ ।।

ग्रन्थरचना काल—

**शाके मार्गणरामसायकधरा १५३५सङ्ख्ये नभस्ये तथा**
**मासे ब्रध्नपुरे सुजातकमिदं चक्रे गणेशः सुधीः ।**
**छन्दोऽलङ्कृतिकाव्यनाटककलाभिज्ञः शिवाध्यापकः**
**तत्र श्रीशिवविन्मुदे गणितभूर्गोपालसूनुः स्वयम् ।। ३ ।।**
**तापीतीरे स्थितेऽकारि ब्रध्नाख्ये जातकं पुरे ।**
**वापजीति द्वितीयेन नाम्नेदं गणकेन च ।। ४ ।।**
**ये पठिष्यन्ति दैवज्ञास्तेषामायुः सुखं शिवम्।**
**भूयात्कैरवकुन्दाभा सुकीर्तिः सर्वतोदिशम् ।। ५ ।।**

**अन्वयः-** तत्र गोपालसूनुः गणेशः सुधी छन्दोलङ्कृतिकाव्य नाटक-कलाभिज्ञः शिवाध्यापकः गणित भूः स्वयं मार्गणरामसायकधरासंख्ये शाके तथा नभस्ये मासे ब्रध्नपुरे श्रीशिवविन्मुदे इदं सुजातकं चक्रे ।

तापीतीरे स्थिते ब्रघ्नाख्ये पुरे वापजीति द्वितीय नाम्नि गणकेन इदं जातकम् अकारि । ये दैवज्ञा: (इदं) पठिष्यन्ति तेषामायु: सुखं शिवं भूयात् (तथा) सर्वतोदिशं कैरवकुन्दाभा सुकीर्ति: भूयात् ।। ३-४-५ ।।

शाक इति । तत्र गोपालसूनु: गणेश: मार्गणरामसायकधरासङ्ख्ये शाके पञ्चत्रिंशदधिकपञ्चदशमिते (१५३५) शाके नभस्ये भाद्रपदमासे ब्रघ्नपुरे सूर्यपुरे इदं सुजातकं शोभनं जातकं श्रीशिवाख्यविद: प्रमोदाय चक्रे कृतवान् । कथंभूतो गणेश: ? शिवाध्यापक: शिवो अध्यापक उपाध्यायो यस्य । छन्दोऽलङ्कृत्यादिविद् छन्दांसि मात्रावर्णभेदभिन्नवृत्तानि अलङ्कृतय: उपमाद्यालङ्कारा: काव्यानि गद्यादिभेदेन द्विविधानि नाटकानि संस्कृतप्राकृतभाषानिबद्धानि कलाश्चित्रकर्माद्या: गणितभूर्गणिताश्रय: सिद्धान्तविदित्यर्थ: ।। ३-४-५ ।।

हिन्दी– श्रीगोपालदास जी के सुपुत्र छन्द-अलङ्कार काव्य-नाटक और कलाशास्त्र (चित्रकला) तथा गणित-सिद्धान्त शास्त्रवेत्ता ''श्रीगणेश'' जी ने शिव नामक अपने गुरु के प्रसन्नार्थ इस जातकालङ्कार नामक ग्रन्थ को शके १५३५ के भाद्रपद मास में सूर्यपुर (ब्रध्नपुर) नामक गाँव में बनाया ।

तापीनदीतीरस्थ ब्रघ्नपुर नामक ग्राम में ''वापजी'' उपनाम से प्रसिद्ध गणक ने इस जातक ग्रन्थ की रचना की । जो दैवज्ञ इसे पढ़ेगें उनको आयु-सुख और शान्ति प्राप्त होगी तथा दशों दिशाओं में कुन्दपुष्प सदृश उनके स्वच्छ सुयश का प्रसार होगा ।। ३-४-५ ।।

ग्रन्थ उपसंहार—

**हृद्यै: पद्यैर्गुम्फिते सुरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**वंशाध्याय: श्रीगणेशेन वृत्तैर्युक्तो वेदै: सैकसंख्यै: प्रणीत:।।७।।**

।। इति जातकालङ्कारे सप्तमोध्याय: ।।

**अन्वय:-** श्रीगणेशेन वर्यै: हृद्यै: पद्यैर्गुम्फिते सुरितोषे अस्मिन् मञ्जुले अलङ्काराख्ये जातके सैकसंख्यै: वेदै: वृत्तै: युक्त: वंशाध्याय: प्रणीत: ।। ७ ।।

हृद्यैरिति । अध्याय पूरयति हृद्यै: पद्यैरिति स्पष्टार्थ: ।। ७ ।।

श्रीमच्छुक्लकुले महीपतियशः शुक्लीकृते जातके
आसीत्कृष्णदयाभरप्रमुदितः कृष्णो जयाद्यः कृती ।
तत्पुत्रेण विभावितातिरूचिरा सज्जातकालङ्कृति–
श्रीरेषा हरभानुना मतिमतां मोदायभूयाच्चिरम् ।।

।। इति श्रीमच्छुक्लोपनामक हरभानुभाविता जातकालङ्कार टीका समाप्ता ।।

**हिन्दी–** श्री गणेश ने हृदय में रखने योग्य मनोहर सुन्दर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने योग्य इस जातकालङ्कार नामक ग्रन्थ में ४+१=५ श्लोको में वशाध्याय (सप्तम) को बनाया ।। ७ ।।

सत्येन्द्रमिश्र कृत 'प्रज्ञावर्द्धिनी' हिन्दी टीका में जातकालङ्कार का वंशाध्याय सप्तम समाप्त ।। ७ ।।

।। समाप्तोऽयं ग्रन्थः ।।